नारदपुराणीयमेतदवहृत्स्तोत्ररत्नाकरे काशीसंस्करणे धृतम । श्लोक सख्या ८ । प्रवक्तानारद ।

त्रिसन्ध्यमस्यपठनात सर्वसिद्धिर्जायते तथा च—

द्वादशतानिनामानि त्रिसन्ध्य य पठन्नर ।
न चविघ्नभयतस्य सर्वसिद्धिकर परम ॥१॥
विद्यार्थी लभत विद्या धनार्थी लभतेधनम ।
पुत्रार्थी लभते पुत्रान मोक्षार्थी मोक्षमाप्नुयात ॥२॥
जपदगणपति स्तोत्र, षडभिर्मासै फललभेत ।
सवत्सरेण सिद्धि च लभते नात्र सशय ॥३॥[1]

अत्र भगवता गणेशस्य द्वादशनामानि तत्र प्रथम वक्रतुण्डमिति । सरला सानुप्रासा भाषा । नामगणना परमिदमिति ।

## (ग) सामान्य स्तोत्राणि (३४)

१ ऋणहर-गणपतिस्तोत्रम श्लोका १० । स्कन्दपुराणादुद्धतम । नामान्तर महागणपतिऋणहर स्तोत्रम । ऋणविमुक्ति फलम ।

२ गजानन-स्तोत्रम श्लोका १४ ।
वहृत्स्तोत्ररत्नाकरे काशी सस्करणे । पृ० । फलम्—मनोरथप्रपूरकम् ।

३ गणपतिद्वाञ्शन्नामम न्नाक्षरावलि । श्लोका ३२
स्तोत्रार्णवे ताडपत्रीयमेतत्स्तोत्रम मद्रास विश्वविद्यालयात्प्रकाशितम । फल विघ्ननाश ।

४ गणपति-स्तोत्रम । श्लोका ८
वहृत्स्तोत्ररत्नाकरे काशी सस्करणे, पृ० २६७ यशोन्मेतत ।

५ गणपति-स्तोत्रम । श्लोका ७ ।
वहृत्स्तोत्ररत्नाकरे काशी सस्करणे पृ० २६८ पूर्वस्यपूरकम् । । ऐहिकामुष्मिकभोगप्रदम् ।

६ गणपतिस्तोत्रम श्लोका १२ ।
वासुदेवसरस्वतीरचितम । वहृत्स्तोत्ररत्नाकरे काशीसस्करणेततीय पृ० ३०३ । गणेशप्रसादकरम ।

७ गणपति-स्तोत्रम । श्लोका ४० ।
श्रीकृष्णलीलाशुक रचितम । स्तोत्रार्णवे पृ० ४६४ । रक्षाकरम ।

८ गणेशकवचम श्लोका २७ ।
वहृत्स्तोत्ररत्नाकरे काशी-सस्करणे पृ० ४ । गणेशपुराणोत्तरखण्डत उद्धतम । सर्वसिद्धिदम ।

[1] तत्रव पृ० ५७

९ गणेशकवचम वा० वि० क० १८०६४। गणेशपुराणीयोपासनाखण्डत ।

१० गणेशाष्टकम विश्वसारतन्त्रत । वा० स० वि० क० १८३३८।
दु खहरम। श्लोका ८। रत्नमालास्तोत्रम् श्लोका १० १म पष्टे, गणाधिपप्रसाद करम।

११ गणेशपूजास्तोत्रम। श्लोका ६। गरुड-पुराण २४ तमऽध्याय सूतकाण्डे प्रमागलयनिवारकम्।

१२ गणेशप्रबन्ध-स्तोत्रम वा० स० वि० वि० क० १६८२६। रचयिता गोविन्दो विघ्ननिवारकम।

१३ गणेशसहस्रनाम। वा० स० वि० वि० क० १४४०। पद्मपुराणनाम्नाधनम्। सववाञ्छितदम।

१४ गणेश सहस्रनामस्तोत्रम। वा० स० वि० वि० क० १४३८। गणशपुराणोपासनाखण्डत। ६४ तम पूर्णोऽध्याय दु खहरम्।

१५ गणेशस्तव वा० स० वि० वि० क० १८५४१। विश्वसारतन्त्रत। विघ्ननिवारक।

१६ गणश स्तवराज गणेशपुराणोपासना खण्डत वा० स० वि० वि० क० ११६२४।

१७ गणेश-स्तोत्रम् (श्रा० शकरकृतम) वा० स० वि० वि० क० १७४१६।

१८ गणेशाष्टकम श्लोका ११। पदमपुराणे ६६ तमेऽध्याय कष्टनिवर्तिकरम। गणेशाष्टक, श्लोका ६।

१९ पदमपुराणोत्तरखण्डतो बहत्स्तोत्र रत्नाकरे काशी सस्करणेधृतम। दु खनाशकरम्।

२० गणशाष्टकम श्लोका —१३। गणेश पुराणतो बहत्स्तोत्ररत्नाकरे काशी सस्करणे धतम। गजानन प्रसन्नताकरम्।

२१ गणेशाष्टकम श्लोका ६। स्तोत्राणवे पष्ठपृष्टे सवसिद्धिदम।

२२ ढुण्ढि-स्तोत्रम्। श्लोका ११०। स्कन्दपुराण काशी-खण्डे ४।५८ तमेऽध्याये दु खहरम।

२३ वक्रतुण्डाष्टकम श्लोका ८। रचयितागोविन्द दु खहरम।

२४ विघ्नेश्वर गीतम श्लोका ५०।
स्तोत्राणवे १३२१ पृष्टे उपासनापरम्।

२५ विनायकस्तोत्रम। श्लोका ६। स्तोत्राणवे ७मे पृष्ट, विघ्ननाशकम।

२६ विनायकाष्टोत्तरशतनामस्तोत्र। श्लोका १६। स्तोत्ररत्नावल्याम् गीता प्रेस, गोरखपुर २०१६ विघ्नविनाशकम्।

२७ गणेशोत्तरशतकम् श्लोका ११३। स्तोत्राणवे, पष्ट ३२०। रचयिता विद्वदत्तोपनामक-वैयाकरणशिरोमणि-श्रीनीलकण्ठशास्त्री। सवदु खहरम्।

२८ गणेशपूर्वशतकम् श्लोका ११०। स्तोत्रार्णवे पृ० ५१३। श्रीनीलकण्ठशास्त्री। विषयभोगनिवृत्तिकरम्।

२९ श्री गणेशाष्टोत्तरशतदिव्यनाम स्तोत्रम्। पद्मपुराणत वा० स० वि० वि० कैट० १४४३।

३० श्री०गणेशस्तोत्रम्। श्लोका २१। शारदातिलके कलकत्ता १९३३। १३२१ पटले १३१ ५१।

३१ सङ्कष्ट-नाशन-गणेशस्तोत्रम्, श्लोका ८। नारदपुराणत स्तोत्ररत्नावल्या गीता प्रेस गोरखपुर, विद्यादायकम्।

३२ सङ्कष्टनाशनस्तोत्र पाद्म श्लोका १५ सङ्कष्टहरम्।

३३ सङ्कष्टहरणगणेश-स्तोत्रम् श्लोका, गरुडपुराणे २२५ तमऽध्याय।

३४ सङ्कटहरणगणेशाष्टकम् श्लोका ८। बृहत्स्तोत्ररत्नाकरे १म पृष्ठ विजयदम्।

तृतीयोऽध्याय

# शक्तिस्तोत्राणि

## शक्ति

१ शक्ति शब्दार्थ —

तत्रादौ शक्ति-स्तोत्र प्रसगे शक्ति-शब्दार्थोनिरूप्यते तन्मूलकत्वाच्छक्ति स्तोत्राणाम । वाक्यार्थज्ञाने पदार्थज्ञानस्य कारणता तु सर्वैरेवाङ्गी कृता । तथा च शक्नोतीति शक्ति । शकलृधातो 'स्त्रियाक्तिन्' इति '[1] कृतक्तिनि प्रत्यये शक्ति सिद्धयति सर्वकर्मकर्तुं प्रभुरिति शक्तिरिति तात्पर्यार्थ । निरुक्ते तु कर्मनाम्ना प्रसगे शक्ति शब्दस्तत्पर्यायत्वेन निर्दिष्टस्तथा च

"कर्मनामान्युत्तराणि अय शिमि शक्ति शिल्पमिति षड्विंशति कर्मनामानि '[2] अत्रैव स्तोत्रे हि य दिवि देवासो अग्निमजीजनञ्छक्तिभि रोदसीप्राम इति मन्त्र-व्याख्यावसरे शक्तिभिरित्यस्य कर्मभिरित्यर्थो[3] दुर्गादासेन कृत । वह्वृचोपनिषदि— देवी ह्येकाग्रआसीत्सैषापरा शक्ति सर्वशक्ति-मजीजनत' [4] अत्र शक्ते पर्याय देवीतिधत ।

आप्टे कृत शब्द कोशे शक्ति शब्दस्य क्षमतार्थो निर्दिष्ट ।[5] सप्रभावो त्साहमन्त्रजयत्वेन त्रेधा तथा च रघुवंशे त्रिसाधनाशक्तिरिवार्थसञ्चयम [6] हलायुध-कोशे शक्योजेतुमनयति विग्रह उक्त । कार्यजनन-सामर्थ्यमर्थ कृत । बल वीर्यम स्थामशौरी लक्ष्मी प्राणा शुष्म उर्जमित्यादयोऽस्या उक्ता [7] शब्द कल्प द्रुमेऽपि कार्यजननसामर्थ्यमर्थ उक्त [8] तत्रैव या देवी सर्व भूतेषु शक्ति

---

१ अष्टाध्यायी पुस्तके ३।३।९४
२ निरुक्ते निघण्टु काण्ड २।१
३ तत्रैव दैवत काण्ड ७।२।१
४ ईशाद्यष्टाविंशत्युपनिषदि वाराणसी १९६२ प्राच्यभारतीय प्रकाशन, पृ० ३६७
५ आप्टे संस्कृत ई कोशे ५४४ पृ०
६ रघुवंशे ३।१३
७ हलायुधकोशे १८७९ प्रथम संस्करण ५४८ पृष्ठ
८ शब्दकल्पद्रुमे ५ भाग १९६१ वाराणसी

रूपेण संस्थितेति" अत्र नागोजी भट्टेन शक्यत जेतुमनयतिकरणेक्ति प्रत्यय कृत सा च शक्ति प्रभावोत्साहमन्त्रभेदात्त्रिधोक्ता। तत्र प्रभुशक्ति कोपदण्डो। विक्रमेण स्वशक्त्या विस्फुरणमुत्साह शक्ति सामर्थ्यमिति भाव। द्रविणतर सह् बलम् शौर्यम स्थाम शुष्मम पराक्रम प्राण इत्यर्था शुष्मसहौ इति शब्द रत्नावली, उज जटाधर। गौरी मेदिनी। लक्ष्मीरिति शब्दमाला। शक्ति नाम्नाब्रह्मण उपासना पुराणपूक्ता तथा च ब्रह्मवैवर्ते—

त्वमेव सवजननी मूलप्रकृतिरीश्वरी।
त्वमेवाद्या सृष्टिविधौस्वेच्छया त्रिगुणात्मिका ॥१॥
कार्यार्थे सगुणा त्व च वस्तुतो निर्गुणा स्वयम।
परब्रह्म स्वरूपा त्व सत्या नित्या सनातनी ॥२॥
तेज स्वरूपा परमाभक्तानुग्रह विग्रहा।
सव-स्वरूपा सर्वेशा सर्वाधिकारा परात्परा ॥३॥[१]

इय च शक्ति परा, अविद्याक्षेत्रज्ञभेदेन त्रिधा तथा च विष्णु पुराणे—

विष्णो शक्ति परा प्रोक्ता क्षेत्रज्ञाख्या तथा परा
अविद्या कम सज्ञाया तृतीया शक्तिरिष्यत ॥१॥[२]

कमशक्तिनाम्नाविद्याशक्ति जगत् वेवेष्टि तथा च—

ययाक्षेत्रज्ञशक्ति सा वेष्टिता नप सवगा।
ससारतापानखिलान, अवाप्नोत्य तिसततान् ॥१॥[३]

सवभावेषु विभिन्नाशक्तयोयाभिर्भावास्तिष्ठन्ति अपगतासु नश्यन्ति ताश्च शक्तयोऽचिन्त्यास्तथा च विष्णु पुराणे।

शक्तय सवभावानामचिन्त्याज्ञानगोचरा।
यतोऽतोब्रह्मणस्तास्तु सर्गाद्यामावशक्तय ॥१॥
भवन्तितपता श्रेष्ठ पावकस्य यथोष्णता ॥[४]

यथकदेशस्थस्याग्निज्योत्स्ना प्रसरणशीलाभवत्यवमेव परस्य ब्रह्मण शक्ति प्रस्फुरण शीला भवति तथा च विष्णु पुराण।

एकदेशस्थितस्याग्ने ज्योत्स्ना विस्तारिणी यथा
परस्य ब्रह्मण शक्ति तथेदमखिल जगत ॥१॥[५]

श्रीविष्णोरहन्तानामिकाप्येकाशक्तिरस्ति तथा च लक्ष्मी-तन्त्रे।

---

१ ब्रह्मवैवर्त पुराणे प्रकृति खण्डे २।६६।७९
२ विष्णुपुराणे ६।७।६७
३ तत्रव ६।७।६२
४ विष्णुपुराण १ ३।२।३
५ तत्रव १।२२।५६

तस्य या परमा शक्ति ज्योत्स्नेव हिमदीधिन ।
सर्वावस्था गतादेवी स्वात्म भूतानपायिनी ॥१॥
अनन्ता ब्रह्मणस्तस्य, साहमस्मि सनातनी ॥[१]

अन्यच्च—

नित्य निर्दोष निस्सीम-कल्याण-गुणशालिनी ।
अह नारायणी नाम सा सत्ता वैष्णवी परा ॥१॥[२]

एव च कारणत्वपथकसिद्ध कार्योपयोगिधर्म शक्ति सा च द्विधा केवल धर्मगता, यथाग्नौ उष्णता धर्म धर्मयुभयगता चेति । यथा शेषशक्ति । क्षेत्रन ईश्वरेविशेषणोऽपिसन् शक्तिमानस्ति तथा चाहिर्बुध्न्यसहितायाम शक्तिश्च चेति प्रश्नोत्तरे ।

शक्तय सर्वभावानामचिन्त्या अपृथक्स्थिता ।
स्वरूपे नवदृश्यन्ते दृश्यन्ते कार्यतस्तु ता ॥१॥
सूक्ष्मावस्थाहि सा तेषा सर्वभावानुगामिनी ।
इदतया विधातु सा, न निषेद्धु च शक्यत ॥२॥
सर्वैरनुयाज्या हि शक्तया भाव-गोचरा ।
एव भावगतस्तस्य परस्य ब्रह्मणामुन ॥१॥
सर्वभावानुगा शक्ति , ज्योत्स्नवहिमदीधित ।
भावाभावानुगातस्य-सर्वशायश्वरी विमा ॥२॥[४]

शक्त्या विना यस्य कस्यापि द्रव्यस्य चराचरस्य च स्थितिरसम्भाव्या । तथा च शिवपुराण ।

एव परस्परापेक्षा शक्तिशक्तिमता स्थिता ।
न शिवेन विना शक्ति न च शक्त्या विना शिव ॥१॥[५]

शक्त कार्याणि च लक्ष्मी-तन्त्रे—

तस्या म पञ्चकर्माणि नित्यानि त्रिदशेश्वर ।
तिरोभावस्तथा सृष्टि स्थिति-सहृतिरेश्वर ॥१॥
अनुग्रह इति प्रोक्त मग्नाय कर्मपञ्चकम् ॥[६]

विष्णो शक्ति सर्वशायश्वरी तथा च लक्ष्मी-तन्त्र ।

---

१ लक्ष्मी तन्त्र २।११।१२
२ तत्रैव ३ १
३ अहिर्बुध्न्यसहितायाम ३।१ २
४ तत्रैव ३।४ २
५ शिवपुराणे वायवीयसहितायां उत्तरखण्डे ४।२
६ लक्ष्मीतन्त्रे १२

सव कायकरी साह विष्णोरव्यय रूपिणी ।
व्यापारस्तस्य देवस्य साहमस्मि न सशय ॥१॥
मयाकृतहि यत्कम तन तत्कृतमुच्यते ॥[1]

शक्तिरेवनाद तस्माच्च विदुदभव तथा च शारदातिलके ।

निगुण सगुणश्चेति शिवो नेय सनातन ।
निगुण प्रकृतेरय सगुण सकल स्मृत ॥१॥
सच्चिदानन्द विभवात सकलात्परमेश्वरात ।
आसीच्छक्तिस्ततोनाद नादाद्बिन्दु समुदभव ॥२॥[2]

शक्तिशब्देन वागप्युच्यते तथा चतरेयारण्यके—

अथवा वागेवेद सवम[3]

ततरीये ब्राह्मण च वाचीमा विश्वा भुवनार्पिता[4]

शक्तिशब्दे श शब्द एश्वय वाचक क्तिश्च पराक्रमवाचक तद्रूपा तद्दात्री च शक्तिस्तथा च देवी भागवते ।

ऐश्वयवचन शश्च क्ति पराक्रम एव च ।
तत्स्वरूपातयोर्दात्री सा शक्ति परिकीर्तिता ॥१॥[5]

पथ्वीद्यौरादयोऽपि शक्तिवाच्यास्तथा च शतपथे—

यथाग्निगर्भापृथिवी तथा द्यौरिन्द्रणगर्भिणी[6]

जमनीये च वागिति पृथिवी ।[7]

ब्रह्मण सगुणरूपस्यार्द्धेन पुरुष रूपो विष्णुरर्द्धेन स्त्री रूपा नारी । एव च सव पुरुष शिव विष्णु पद-वाच्य सर्वा च नारी शक्ति पद वाच्या । तथा च मनुस्मृतौ—

द्विधाकृत्वाऽमनो देह अर्द्धेन पुरुषोऽभवत ।
अद्धन नारी तस्या स विराजमसृजत्प्रभु ॥१॥[8]

मायासकल्पत जगत शक्तिकृतमवतथा च देवी भागवत—

मन्माया शक्ति सकल्पत जगत्सव चराचरम ।
सापिमत्त पथङमाया नास्त्येव परमाथत ॥१॥[9]

---

१ लक्ष्मीतन्त्रे
२ शारदातिलके करचता १ १२।१६
३ एतरेयारण्यके ३।१।६
४ ततरीयारण्यके २।८।८।४।५
५ देवीभागवत ६।२।१ मनसुखराय मोर क्लाइव रोड कलकत्ता १६६०
६ शतपथे १४।६।७।२
७ जै सूत्रे ४।२२।११
८ मनस्मत्याम १।३२
६ देवीभागवते ७

शक्ति परमात्मनोब्रह्मण परा शक्ति तस्या एव सर्वं जगत जायते। तथा च—

आराध्या परमा शक्ति सर्वैरपिसुरासुरैः।
मातु परतर किंचित नाधिक भुवनत्रये ॥१॥[1]
त्व परा प्रकृति साक्षात ब्रह्मण परमात्मन
त्वत्तो जात जगत्सर्व त्व जगज्जननी शिवे ॥२॥[2]

शक्तयश्चपद—

पराशक्ति ज्ञान शक्ति क्रियाशक्ति,
इच्छाशक्ति कुण्डलिनीशक्ति अपराशक्ति ॥[3]

ललितास्तवम —

१ यस्किंचिदिकम्पने शक यव द्रविण वलररानमादयाऽन्य वाच्या।
२ धम धर्मिगतत्वेन द्विधा।
३ सर्वस्त्रिय शक्तिरूपा।
४ शक्तिपदवाच्यब्रह्म।
५ लक्ष्मी मेधा-गौरी-सरस्वती प्रकृत्यादि शक्तिशब्दवाच्यम।
६ एश्वय पराक्रमरूपा तद-दात्री च शक्ति।
७ पथिव्यादाद्यान्याम्यावाच्याया।
८ मूल प्रकृति शक्ति।
९ पराविद्याशैवागरूपा।
१० सवभावस्वम्या स्थिति।
११ सवकार्यकरी।
१२ अस्या-एव नादबिन्दवादीनामुत्पत्ति।
१३ वागादयाऽप्यस्या अर्था।
१४ परा प्रकृत्यादि रूपा।

## २ शक्ति सख्या

शक्त सख्या विषयेविभिन्ननिर्देशा समुपलभ्यन्ते। वस्तुतस्तु एकाप्य नन्ता अनन्ता चरा। यथा च परमात्मनोऽभिन्निधा तथा शक्तिरेरपि त्रिधा तथा च—

१ स्यात्के गीता प्रेस गोरखपुर, पृ ४६
२ तत्रैव पृ० ४८

परमात्मा यथादेव एकएव त्रिधा स्थित
प्रयोजनवशाच्छक्तिरेव त्रिधाभवत ॥१॥[1]

क्रिया-सारे च विन्दु शिवात्मकस्तत्र बीज शक्त्यात्मक स्थितम ।
'तयोर्योगे भवे नाद तम्यो जातास्त्रिशक्तय ॥१॥ [2]

गोरक्षसिद्धान्ते च त्रिशक्तिमय परमोमिति तथा च—
इच्छा क्रिया तथा ज्ञान गौरीब्राह्मी तु वैष्णवी ।
त्रिधाशक्ति स्थिता यत्र तत्पर ज्योतिरोमिति ॥१॥

ब्रह्मवैवर्तेऽष्ट शक्तय —
इन्द्राणी वैष्णवी शान्ता ब्रह्माणी ब्रह्म वादिनी ।
कौमारी नारसिंही च, वाराही विकटाकृति ॥१॥
माहेश्वरी महामाया भैरवी भीमरूपिणी ।
अष्टो च शक्तय सर्वा, रक्षस्था प्रययुमुदम ॥२॥[4]

एता एव सप्तशत्या अष्टमेऽध्याये रक्तबीज योद्धुमागता इति वर्णिता ब्रह्मवर्ते ११६ तमेऽध्याये अष्टौ शक्तय कथिता [5] प्रकृतिखण्ड च तत्र । प्रपच सारे पचाशद विष्णुशक्तय कथितास्तथा च—
कीर्ति कान्ति तुष्टिपुष्टी धृति शान्ति क्रियादय
प्रीतीरती रमा प्रोक्ता क्रमेण स्वरशक्तय ॥१॥
जया दुर्गा प्रभा सत्या चण्डा वाणी विलासिनी ।
विरजा विजया, विश्वा, विनन्दा सुनदा स्मृति ॥२॥
ऋद्धि-समृद्धि शुद्धिश्च भुक्ति मति क्षमा ।
रमोक्ता ह्लादिनी क्लिन्ना वसुधा वसुधा जरा ॥३॥[6]
परा परायणा सूक्ष्मा सन्ध्या प्रज्ञा परा निशा ।
अमोघा विद्युता चेति शक्तय सव कामदा ॥४॥[7]

एवमेव पचाशच्छुद्रशक्तय गणोदरी विरजाद्य । कुलशक्तयश्च । रैवतीतन्त्रे तृतीय पटले चतु षष्टि शक्तय इति ।

३ प्रमुखनाम्नामथा —

शक्ति शब्दार्थे निरूपिते स्तोत्रेषु समागतानाम शक्ति प्रमुख नाम्नामर्था

१ शब्दकल्पद्रुमे ५ भाग शक्तिमाहात्म्यत उद्धतम १९६१ सस्करण
२ तत्रव, क्रियासारत उद्धतम्
३ तत्रव गोरक्षसिद्धान्तत उद्धतम
४ शब्दकल्पद्रुमे ५ भाग १९६१ सस्करण ब्रह्मवैवर्तत ११६ अध्यायत उद्धता
५ तत्रव प्रकृति खण्डत १२० अध्यायत १८ २
६ प्रपचसारत शब्दकल्पद्रुमे
७ प्रपचसारे १।११ १४

निर्दिश्यन्ते। तत्रादौ लक्ष्मी —

लक्ष्मी —

१ लक्षयति नाम दर्शयति चराचर जगत्सालक्ष्मी ।
२ लक्ष्यते वेदादिभि शास्त्र ज्ञानिभिश्च सालक्ष्मी ।[1]
३ लक्षयतिपश्यति भक्तेचिह्नयतिचराचर जगत
अथवा वदिक योगिभिश्च लक्ष्यते ।
४ लक्षेर्मुटचे युणादिसूत्रव्याख्याया लक्षयति
पश्यत्यक्ति वा सा लक्ष्मी ।[2]
५ लक्षयति जनान लक्ष्यते जनैर्वेति लक्ष्मी ।
६ लक्ष्मीलाभात लक्षणात लप्स्यमानात लाछनात लपतेर्वास्यात्
प्रेप्सा क्रमणेलम्भतर्वा स्यादाश्लपाक्रमणोलज्जतर्वास्यादश्लेपा
क्रमण [3] इति ।
७ जगत या लक्ष्यमाणा सा लक्ष्मीरिति गीयते ।[4]
८ लक्ष-दर्शनाकनयो बाहुलकात मक्प्रत्यय ।[5]

श्री —

१ श्रयति हरिमिति श्री ।[6]
२ श्रयतीवष्णय भाव सा श्रीरितिनिगद्यते ।
३ ज्याश्रीयत्त सेव्यतसर्वेणजगता विद्वदभि योगिभिश्च
सा श्रीरीश्वरी क्विवधि इत्यादिना क्विपिसिद्धयति ।
४ अहिर्बुध्न्यसहितायाम—
शृणाति निखिला दोषान श्रणाति च गुणजगत् ।
श्रीयत चाखिलनित्य, श्रयते च पर पदम ॥१॥

अथर्ववेदे—

अश्व पूर्णा रथमध्या हस्तिनाद प्रमोदिनीम् ।
श्रियदवीमुपह्वय श्रीर्मेदेवीजुषतामिति ॥२॥[7]

---

१ सत्यार्थ प्रकाश प्रथम सस्करण प ८
२ उणादिसूत्रम् ४।१४०
३ पञ्चोत्तरशत मालिका प० सं० विद्यासागर शास्त्री, रामगंज अजमेर २०२०, पृ० १६५
४ अहिर्बुध्न्यसहितायाम् अध्याये
५ अथर्ववेदे १।४।१८।१।मन्त्रे
६ अहिर्बुध्न्यसहितायाम् शतकपके पृ० २७
७ अष्टोत्तर शतनाममालिकायाम् पृ० १६८

एवच श्रिञ सेवायाम हिंसापात्रादिनिष्पद्यते ।

पद्मा-कमला—

अव्यक्त-कालपुम्भावात पद्मा पद्म मालिनी ।
कामदानाच्चकमला पर्याय सुखमोगता ॥१॥[१]

देवी—

(क) द्योतनादिगुण-युक्ता । दिवु क्रीडा विजिगीषा व्यवहार द्युतिस्तुति मोदमदस्वप्नकान्ति गतिषु । इगुपधलक्षणे के प्राप्त देवसेव मेषादय पचादिषु द्रष्टव्यमिति वचनात नंदि ग्रहीति[२] अचि देवडिति टित्वेन पाठात टिड्ढाणञित[३] ङीपि यस्येति चेतीकार लोपेदवोति 'शन्नो मन्त्र व्याख्यावसरे सायण [४] इति ।

(ख) देवो दानात दीपनात द्योतनात द्यु स्थाने भवति वा स्त्रीत्वे[५] तथा ऋग्वेद दवीमुपसोरोचमानाम [६] पुराणी[७] देवीमुपस सुवत्तिमहति ।[८]

सरस्वती—

१ सृगतौ धातो सरस्तास्मा मतुपि
२ सर इत्युदक नाम तत्वस्मात्सर्त सृगतौ इत्यस्य तेन सरसाविशिष्टेन सद्वतीती दुर्गादास [९]
३ सरो विज्ञान विद्यते यस्या सा ।[१]
४ सर प्रसरणमस्या अस्तीति निघण्टुभाष्यकारोदेवयज्वा ।
५ मरस्वती देवय तो हवन्ते सरस्वतीमध्वरेतापमाने सरस्वती सुकृता अह्लय त, सरस्वती दाशुषेवामप्रदात ।[११]

---

१ शक्यरके प० २७ अहिव ध्न्यसहितात
२ अष्टाध्यायाम् (पाणिनि) ३।१।१३४ तथा ४।१।१५
३ ४ अथर्ववेद १।६।१
५ निरुक्ते ७।१५
६ ऋग्वेदे ६।११५।२
७ तत्रव ३।६१।१
८ तत्रव ३।६०
९ निरुक्त ५।२६ व्याख्यायाम्
१० सत्यार्थप्रकाश प्र स प० १६ व्याख्यायां निघण्टभाष्यत
११ ऋग्वेदे १०।१७।४

वहद्देवताया च—

सरासि घतवत्यस्य, सति तोनेपु यत्रिपु
सरस्वतमितिप्राहु वाच प्राह सरस्वतीम ॥१॥[1]
अरण्यानी च रात्री च, श्रद्धा चोपा सरस्वती ।
पृथिवी चव नामधा, भूत्वाप्यच भजति ॥२॥[2]

एपव दुर्गा सूर्या सती गौरी तथा च वहृद दवतायाम—

एपव दुर्गा भूत्वच कृत्वा स्यात्सूवतवर्णिनी ॥[3]
सूर्यमिव सतीमता गौरी वाच सरस्वतीम ।
पश्यामो वैश्वदवेपु निपातनैव केवला ॥२॥[4]
सरस्वतीरवमिरथस्मिन् अधर्च मध्यमानुवाक् ॥[5]

चण्डिका

१ चण्डयते कुप्यत इति चण्डा चण्डी च सव चण्डिका
ब्रह्मादिभ्यश्चेति[6] ङीपि केऽण[7] इति ह्रस्वे ।
२ चद्धावुत्तिस्तशनुभिर्निदिता सज्ञाया वन् ।
३ चण्ड उग्र शिव तस्य स्त्री सज्ञाया कनि ।
४ चण्डयते इति चण्डिकाण्वुलि युवोरनाकौ इत्यकि स्त्रीत्वे प्रत्यय
स्थादिति[8] इत्वे । प्रपचित चतत सवशान्तनवीव्याख्याया मार्कण्डेय
पुराणे ।[9]

महामाया—

१ मात्यस्या विश्वमितिमाया' 'माकाभ्यामयचि ।
२ मानपूजायाम चुरादि मानयितुमहामाया पृपोदरादित्वा मलोप ।
३ मा लक्ष्मी अय शुभावहाविधि यस्या सामाया महतीचासौ माया
महामाया ।
४ मा विष्णुस्तस्या माया महती चासौ माया महामाया ।

---

१ वृहद्देवतायाम् २।४१ तथा २।७४
२ ३ तत्रव २।७७
४ तत्रव २।८१
५ तत्रव २।८२
६ अष्टाध्यायाम् ४।१।४५
७ तत्रैव ७।४।१३
८ अष्टाध्यायाम ७।१।७
९ तत्रैव ७।३।४

५ अयगतो अययति अपयतिणिज तात पचाद्यचि स्त्रियाटापि अया आसमन्तात अभिव्याप्ता मा लक्ष्मी उपासकाय अयमति अपयति या शक्तिभवतीतिमहामाया ।[1]

सीता—

(क) मूल प्रकृति रूपत्वात्सा सीता प्रकृति स्वयम ।
प्रणव प्रकृति रूपत्वात सा सीता प्रकृतिरुच्यते ॥१॥[2]

(ख) सीतति त्रिवर्णात्सा साक्षा मायामयो भवेत ।
विष्णो प्रपचबीजच, माया ईकार उच्यत ॥१॥
सकार सत्यममृत प्राप्ति सोमश्च कीत्यते ।
तकार तार-लक्ष्म्याश्च वराज प्रस्तर स्मृत ॥२॥
सीताभगवतीतन्या मूल प्रकृति-सञ्ज्ञिता ।
प्रणवत्त्वात्प्रकृतिरिति वदन्ति ब्रह्मवादिन ॥३॥[3]

दुर्गा— १ दुदु खेन गम्यत प्राप्यते ।
२ दुदु खेन गम्यते अथवा ।[4]
३ दुर्गासु नासनात दुर्गा तथा च सप्तशत्याम्
तत्रव च वधिष्यामि दुगमाख्यमहासुरम्
दुर्गा देवीति विख्यात तन्मेनाम भविष्यति ॥१॥[5]
४ सव बुद्ध्यधिदेवीयम तर्यामिस्वरूपिणी ।
दुग सकटहन्त्रीति दुर्गेति प्रथिता भुवि ॥२॥[6]
५ दुर्गतिसत्रायत यस्माद देवी दुर्गेति कथ्यते ।
मूल प्रकृति रूपिराया सम्विदो जगदुद्भवे ॥
प्रादुर्भूत शक्तियुग्म प्राणबुद्ध्यधिदैवतम् ॥१॥
दुर्गाबुद्ध्यधिष्ठात्री राधाप्राणश्वरीमता ।

राधा— राध्नोति सकला कामान तस्माद्राधतिकीर्तिता ॥२॥[7]

प्रकृति—प्रशब्द्ऽत्रप्रेभसग कृतिश्च प्रशब्द प्रकृष्टवाचक कृतिश्च सृष्टौप्रवतते च ब्रह्म-वैवर्ते—

---

१ भार्कण्डय पुराणे ८१।१ व्याख्या मनसुखराय क्लाइव रोड कलकत्ता १९६०
२ शाक्तोपनिषद् (अड्यार पुस्तकालये १९२५ श्री महान्वशास्त्री) पृ० ८६
३ तत्रव ८६ ६१ प
४ हलायुधकोश ३२८
५ सप्तशती स्तोत्र ११ ४६ ५
६ देवीभागवते ८।२०
७ तत्रव ७।८

प्रकृष्टवाचक प्रश्च, कृतिश्च सृष्टिवाचक
सृष्टौ प्रकृष्टा देवी प्रकृति सा प्रकीर्तिता ॥१॥[1]

प्रकृतौ प्रशब्दस्य सत्वगुणाख्य कृश्च रजसि तिश्च तमसि तथा च देवी भागवते—

गुणसत्वेप्रकृष्टे प्रशब्दो वर्तते श्रुत ।
मध्यमेरजसिकृश्चेति तिशब्दसतमसिस्मृत ॥१॥
त्रिगुणात्मस्वरूपाया सा च शक्तिसमन्विता ।
प्रधाना सृष्टिकरणे, प्रकृतिस्तेन कथ्यते ॥२॥
प्रथमेवर्तत्तप्रश्च कृतिश्च सृष्टिवाचक ।
सृष्टेरादौ यादेवी, प्रकृति साप्रकीर्तिता ॥३॥[2]

४ महात्म्यम्—

वस्तुतस्त्वस्या माहात्म्य नेति नेतीति शब्दैरेव वक्तु शक्यते । शब्दार्थ प्रकरणे तदर्थ निरूपणे च केचिदशा स्पष्टीकृता । जगति यत्किंचिदभूत, भविष्यति भवति वा सर्व शक्यत्व । मनोरथ पूरयितुमस्या प्रभावादेव समर्थो भवति जन । शक्तिप्रभावादेव विधिहरिहरादय स्व-स्वकार्य सम्पादयन्ति । तथा शक्ति-कागमसर्वस्वतन्त्र—

शक्ति विना महेशानि, सदाह शवरूपक ।
शक्तियुक्तो यदादेवि शिवोऽह सर्वकामद ॥१॥
शक्तियुक्त जपन्मन्त्रनमन्त्र केवल जपेत ।
सावित्रीसहितोब्रह्मा सिद्धोऽभूनगनन्दनि ॥२॥
द्वारवत्या कृष्णदेव, सिद्धोऽभूत्सत्ययासह ।
तथा श्रीधवधूसगाममसिद्धिवरानन ॥३॥
ईश्वरोऽहमहादेवि, केवल शक्तियोगत ॥४॥[3]

शक्तिमन्त एवावतिष्ठन्ते नतरे तथाचोत्पत्ति-माहात्म्ये—

सहबुद्ध्या बुद्धिमन्तो, न वक्तुमुचितेतरा
सर्वे शक्त्यालयविश्वे शक्तिमन्ताहिजीविन ॥१॥[4]

शक्तिमाहात्म्य शिवपुराणे—

ज्ञानशक्तिस्तुतत्काय कारण करण तथा ।

---

१ ब्रह्मवैवर्तपुराणे २।१।५
२ देवीभागवते ९।१।६ = मनसुखराय मोर क्लाइव रोड कलकत्ता, १९६०
३ शब्दकल्पद्रुमे ५ भागे १९६१ । वाराणसी शक्ति शब्दार्थ ।
४ तत्रव, शक्तिकागमसर्वस्वतन्त्र ।

प्रयोजन च तत्वेन बुद्धिरूपाध्यवस्यति ॥१॥
यथेप्सित क्रियाशक्ति यथाध्यवसित जगत ।
कल्पयत्यखिलकार्याणि क्षिणात्सकल्परूपिणी ॥२॥[1]

देवी भागवत स्पष्ट कथित यत सव वाक्यमेतदेव । जना विष्णुहीन शिवहीन न व्यवहरन्ति कचित शक्ति-हीन वन्ति

रुद्रहीन विष्णुहीन न वदन्ति जना किल ।
शक्तिहीन यथासव प्रवदन्ति नराधमम ॥१॥[2]

ब्रह्मवैवर्ते च गणेशखण्डस्य सप्तमोऽध्याय स्पष्टमवरितम यत् ब्रह्म विष्णु शिवादय सर्वे शक्तय । यथा कुलालो मृदा विना घट कर्तु मक्षम स्वर्णकार स्वर्णविना कुण्डलकर्तु मक्षम । तथैव शिवादय शक्त्याविना किंचित्कर्तु मक्षमा । शक्तिरत्रोपादानकारणत्वेनोक्तजगत समवायसम्बन्धोऽपि तया सह ।

सप्तशत्या विविध मन्त्राणामाराधनेनासम्भवानि कार्याण्यपिसिध्यन्ति तथा च—रोगनाशाय ।

रोगानशेषानपहंसितुष्टा रुष्टातुकामान् सकलानभीष्टान्
त्वामाश्रितानां न विपन्नराणां, त्वामाश्रिताह्याश्रयतां प्रयान्ति ।[3]

सामूहिककल्याणाय च—

देव्या यया ततमिद जगदात्मशक्त्या ।
निश्शेषदेवगण शक्तिसमूहमूर्त्या ।
तामम्बिकामखिलदेवमहर्षिपूज्याम्
भक्त्यानता स्म विदधातु शुभानिसा न ॥१॥[4]

जगतोऽशुभविनाशाय—

यस्या प्रभावमतुलंभगवाननन्तो
ब्रह्मा हरश्च नहि वक्तुमल बल च ।
सा चण्डिकाखिल जगत्परिपालनाय
नाशाय चाशुभभयस्य मति करोतु ॥१॥[5]

एव भगवती सव कर्तु क्षमा । तस्या निमेषपातमात्रेणाशक्यमपि सम्भवति । अतएवाघटित घटनापटीयसीयमुच्यते ।

इयमेव भगवती सुकृतिनामवेनेपुलक्ष्मीरयत्रालक्ष्मी । अनयैव विश्वरक्षा सम्भवति । तथा च सप्तशत्याम विश्वरक्षाय ।

---

१ शिवपुराण वायवीय संहितात ७।८
२ देवीभागवते ३।६।१५
३ सप्तशतीस्तोत्र ११।२९
४ तत्रव ४।३
५ सप्तशती स्तोत्र ४।४

या श्री स्वय सुकृतिना भवनष्वलक्ष्मी
पापात्मना कृतधिया हृदयेषुबुद्धि ।
श्रद्धासताकुलजन—प्रभवस्य लज्जा
ता त्वा नता स्म परिपालय देवि विश्वम ॥१॥[1]

अभ्युदयाय—

विश्वेश्वरीत्व परिपासि विश्वम्
विश्वात्मिकाधारयसीतिविश्वम् ।
विश्वेशवन्द्या भवत भवन्ति
विश्वाश्रया य त्वयि भक्ति-नम्रा ॥१॥[2]

विपद्विनाशाय—

शरणागतदीनार्त-परित्राण परायणे ।
सर्वस्यार्ति हरे देवि नारायणि नमोऽस्तुते ॥१॥[3]

श्रीसूक्ते च—

ऋणरोगादि-दारिद्रयम पाप च अपमृत्यव ।
भयशोक मनस्तापा नश्यन्तु मम सर्वदा ॥१॥[4]

मन्त्रेषु च—

आवचस्वमायुष्यमारोग्यमाविमघावत्पवमानेमहीयते ।
धन धान्यपशुबहुपुत्रलाभ शतसम्वत्सरदीर्घमायु ॥२॥[5]

एव चास्याभगवत्या आराधनया आध्यात्मिकाधिदैविकाधिभौतिको पद्रवाणाशान्ति ।

## ५ शक्त्या स्वरूपम् वदिकम्

शक्तिस्तोत्र निरूपणप्रस्तावेऽस्या शक्तिस्वरूपविवेचनमत्यावश्यक । वेदप्रमाणत्वात्मवविषयाणाम । वस्तुतोऽस्या स्वरूपमनिर्वचनीय । ब्रह्मविष्णुशिव पत्न्य शक्तयो वा लक्ष्मी पार्वती-सरस्वत्यस्तथा च महानारायणोपनिषदि—

"ओ ह्री श्रीश्च त लक्ष्मीश्च पत्न्यौ । [6]

इय च परमादेवा शतमूला शताङ्कुरा दु स्वप्नादिनाशिनी तथा च तत्रैवो पनिषदि । दूर्वारूपाचेयम् ।

---

१ तत्रव ४।५
२ तत्रैव ११।३३
३ तत्रैव ११।१२
४ श्रीसूक्ते २६
५ तत्रैव २७
६ महानारायणोपनिषदि (विमलानन्द मधुर) पृ० २१

सहस्रपरमादेवी शतमूलाशतांकुरा ।
सर्वहरतु मे पापं दूर्वा दुःस्वप्न नाशिनी ॥१॥[1]
सर्वजनानामलक्ष्मीनाशिका । तथा च
श्रीर्मेभजतु अलक्ष्मीर्मेनश्यतु ।[2]

श्री सूक्ते च—

ऋण रोगादिदारिद्र्यं पापं चापमृत्यवः ।
भयशोकमनस्तापा नश्यन्तु मम सर्वदा ॥२॥[3]

लक्ष्मी रूपेणहिरण्य-वर्णा स्वर्ण रजत मालिका श्वेताश्व पूर्णा रथस्था हस्तिनादा । आदित्यवर्णासिद्धिपुष्टिकारिणी सर्व भूतानामीश्वरी तथा च श्री सूक्ते ।

आं हिरण्य-वर्णां हरिणी, सुवर्ण रजतस्रजां ।
चन्द्रां हिरण्य मयी लक्ष्मी जातवेदो ममावह ॥१॥
अश्वपूर्णां रथमध्यस्थां हस्तिनाद प्रमोदिनतीम् ।
श्रियदेवीमुपह्वये श्रीर्मा देवी जुषतामिति ॥२॥
चन्द्राप्रभासां यशसा ज्वलन्ती
श्रियलोके देव-जुष्टामुदाराम ।
तां पद्मनेमीशरणमहप्रपद्य
अलक्ष्मीर्मेनश्यतांत्वावृणामि ॥३॥[4]

भगवती, अजा लोहिता शुक्ला कृष्ण । सृष्टौलोहिता पालने शुक्ला सहारे कृष्णा तथा च महानारायणपनिषदि ।

अजामेकां लोहितशुक्ल-कृष्णां,
बह्वीं प्रजाजनयन्तीं सुरूपाम ।
अजोह्येको जुषमाणोऽनुशेते
जहात्यनांभुक्तभोगामजोऽन्य ॥१॥[5]

रोचमाना सेय तथा चग वदे देवीमुपम रोचमानाम्[6]

पुराणी, अपीय युवतिनित्या सनातनत्वात व्रतधारिणी हिरण्यवर्णा तथा चक संहितायाम्—

---

१ तत्रव ९।३४
२ महानारायणोपनिषदि (विमलान द मयूर) ९।४८ पृ० ७५
३ श्रीसूक्ते २६
४ तत्रैव १ ३ ५ ६
५ महानारायणोपनिषदि (विमलानन्द मयूर) ३।२ पृ० १४३
६ ऋक् संहितायाम् ९।११५।२

पुराणीदेवीयुवति पुरं धिरनुव्रत चरतिविश्वयोरसेदव ।[1]
अच्छावोदेवीमुपसविमातीप्रवोमरं वनयसासुवृत्रि ।[2]
हिरण्यपाणि सविता विचषणी ।[3]

द्योतनादि-गुण-युक्ता दान-दीपन-द्योतन द्युस्थानत्वादि-युक्ता तथा श नादेवीति[4] मन्त्र-व्याख्याया सायण प्रात सूयसमप्रभा पाशा-कुश धारिणी त्रिनेत्रा रक्तवसना महापापविनाशिनी तथा च देव्युपनिषदि ।

हृत्पुण्डरीकमध्यस्था प्रात सूयसम प्रभाम ।
पाशाङ्कुशधरा सौम्या वरदाभयहस्तकाम ॥१॥
त्रिनत्रा रक्त-वसना भक्तकामदुहमजे ।
भजामि त्वा महादेवि, महाभयविनाशिनी ॥२॥[5]

महत्तत्वादिरूपेणेय जगदव्याप्नोति । सवप्रकाशिका रात्रौ च विशेषेण पश्यति जनान । समस्त विभूतिधारिका तथा चक सहितायां ।

भा रात्रीव्यरयदायती पुरत्रादव्यक्षिभि ।
विश्वा अधिश्रियोऽधित ॥[6]

भगवतीजगदम्बिका पामरा स्वाकधारयति ग्रामवासिन पक्षिणो नरा नगरवासिनो वा तदङ्कमासाद्यसुखस्वपं ति तथा च ऋग्वेदे—

निग्रामाह्रो अविक्षतनिपद्वन्तो निपक्षिण निश्यना सश्चिदर्थिन ।[7]

सर्वे देवा अस्यामेव सं निविष्टा । इयमेव सत्वरजस्तमासि । देवदान-वग धवमनुष्या विभि नाधारेण वस त । ब्रह्म विष्णु रुद्रादयोऽस्या एव स्व रूपान्तरा ग्रहनक्षत्रादयोऽप्या रुपाणि काल परिमाणानिचेयमेव तथा च दे युपनिषदि—

'सपाष्टौवसव सपकादश रुद्रा सपाद्वादशादित्या, सया विश्वेदेवा सोमपा असोमपाश्च । सैपा यातुधाना असुरारक्षासि पिशाचा यक्षा सिद्धा सया सत्वरजस्तमासि । सैपाब्रह्माविष्णुरुद्र-रूपिणी । सयाप्रजापती द्रमनव । सपाग्रहनक्षत्रज्योतींपि कालाकाष्ठादिकाल रूपिणी ।"[8]

तथा चेयम ब्रह्मरूपिणी विविधदेव सहचरतिसर्वान च दधाति । तथा

---

१ ऋक्सहितायाम् ३।६१।१
२ तत्रव ३।६१।५
३ तत्रैव १।२५।६
४ अथववदे १।६।१
५ देव्युपनिषदि २१
६ ऋक्सहितायाम १०।१ ।१२७।१
७ ऋग्वे १।१०।१२७।५
८ देव्युपनिषदि १७

च ऋग्वेदे—

अहं रुद्रेभिर्वसुभिश्चराम्यहमादित्यैरुत विश्वदेवैः ।
अहं मित्रावरुणावुभौ बिभर्म्यहमिन्द्राग्नी अहमश्विनावुभा ॥
अहं सोममाहनसं बिभर्म्यहं त्वष्टारमुत पूषणं भगम्
अहं दधामि द्रविणं हविष्मते सुप्राव्ये यजमानाय
अहं रुद्राय धनुरा तनोमि ब्रह्मद्विषे शरवे हन्तवा उ
अहं जनाय समदं कृणोम्यहं द्यावापृथिवी आविवेश ।[1]

अथर्ववेदेऽप्येवमेव शब्दविरलं स्तूयते ।[2]

तथा चास्या ब्रह्मत्वं सर्वदेवब्रह्माविष्णुरुद्रादिजनकत्वेन सर्वकारणत्वेन च निर्विवादम् । तथा च श्वेताश्वतरोपनिषदि ।

मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम् ।
तस्यावयवभूतैस्तु व्याप्तं सर्वमिदं जगत् ॥१॥[3]

द्वे अक्षरे ब्रह्मपरे त्वनन्ते विद्याविद्ये निहिते यत्र गूढे ।
क्षरं त्वविद्या ह्यमृतं तु विद्या, विद्याविद्ये ईशते यस्तु स देवः ॥२॥[4]

गीतायां च—

मम योनिर्महद्ब्रह्म तस्मिन्गर्भं दधाम्यहम् ।
सम्भवः सर्वभूतानां ततो भवति भारत ॥१॥[5]
मयाध्यक्षेण प्रकृतिः सूयते सचराचरम् ।
हेतुनानेन कौन्तेय जगद्विपरिवर्तते ॥१॥[6]

ब्रह्मसूत्रे— सर्वोपेता तद्दर्शनात् ।[7]

श्वेताश्वतरोपनिषदि च—

ते ध्यानयोगानुगता अपश्यन्
देवात्मशक्तिं स्वगुणैर्निगूढाम् ।
यः कारणानि निखिलानि तानि,
कालात्मयुक्तान्यधितिष्ठत्येकः ॥१॥[8]

इयमेव ब्रह्मणः परशक्तिरुच्यते । तथा च तत्रैव—

---

१ ऋग्वेदे १०।७।१२५। १ २ तथा ६
२ अथर्ववेदे ४।३ ।१ तथा ५ पृ ५१६
३ श्वेताश्वतरोपनिषदि ४।१०
४ श्वेताश्वतरोपनिषदि ५।१
५ श्रीमद्भगवद्गीतायाम् १४।३
६ तत्रैव ९।१०
७ वेदान्तदर्शने ब्रह्मसूत्रं गीताप्रेस गोरखपुर २ १४ सं० सं० २।१।३०
८ श्वे उप १।३

नतस्यकार्यकरणं च विद्यते,
न तत्समश्चाभ्यधिकश्च दृश्यते।
परास्य शक्तिर्विविधैव श्रूयते
स्वाभाविकी ज्ञानबलक्रिया च ॥१॥[1]

बह्वृचोपनिषदि—सच्चिदानन्दलहरी, महात्रिपुरसुन्दरी
प्रविश्य स्वयमेकैवविभाति सर्वात्मानं ततोऽ
यन्नात्माविद्यायाद्वितीयब्रह्मासमविदिति ॥[2]

देवी भगवती ब्रह्मस्वरूपा सर्वविदधाति। इयमेवासीत तत सर्व प्रावर्तत। अस्यामेवजीवा प्रलयं यान्ति अतएव जायन्ते जीवन्ति च। तथा च जाबालोपनिषदि। शाक्तक—

विद्याशक्तिः समस्तानां शक्तिरित्यभिधीयते।[3]

अनयैव प्रेरितं सर्वं भवति। अस्या एवकृपया आयुद्रविणं ब्रह्मवर्चस्वादीनि प्राप्यन्ते। तथा च महानारायणोपनिषदि।

स्तुता मया वरदा वेदमाता, प्रचोदयन्ती पवनेद्विजाता

अथर्ववेदे च सरस्वत्या देव्या उपासना कथिता हविषा यजनं च प्रतिपादितम्।

सरस्वत्यावाचमुपह्वयामहे।[4]
सरस्वत्या उरु व्यचे दिदेमहविषावयम्।[5]

इत्थं च ऋग्यजुरथर्ववेदोपनिषदारण्यकसंहितासु श्रीसूक्तोपोऽथर्ववेदेदेवीसूक्तादिषुभगवत्या देव्या निर्देशः प्राप्यते। ब्रह्मस्वरूपेण वर्णनं चोपलभ्यते। अस्या उपासनाया प्राचीनता सिद्ध्यति।

तथा शक्तिपूजोत्तरकालिकबौद्धप्रभावात् प्रचलितिति पाश्चात्यानां वादो नादरणीय इति। मुण्डकोपनिषदि च—

काली कराली च मनोजवा च[6]

## (ख) लौकिक स्वरूप (स्तोत्रप्रतिपादितम्)

वेदादिषु भगवत्या स्वरूपे प्रतिपादिते तदुत्तरकालीन साहित्येपुराणादौ विशेषतः स्तोत्रेषु तस्या स्वरूपम् किमितिवर्ण्यते। भारतीयवाङ्मयेशक्ति साहित्य

---

१ तत्रैव ७।८
२ बह्वृचोपनिषद् ३६
३ शाक्तक गीताप्रेस गोरखपुर पृ २७३
४ अथर्ववेद ५।१०।८
५, तत्रैव ५।२३।१
६ मुण्डकोपनिषद् १।२।४

स्वानन्दराशिरिव गाम्भीर्यं चावहति। शक्ति-शक्तिमतो ब्रह्मणस्तया कोऽपि भेदो नास्ति। तथा च शक्तिस्वरूपनिरूपणं वा ब्रह्मणोनिरूपणं प्रकारान्तरेण। शिवेन विना शक्तिः शक्त्या विना च शिवः नावतिष्ठेते। उभयोः परस्परापेक्षित्वात्। समर्थितोऽयमर्थः पुराणादिषु तथाब्रह्मवैवर्ते (शक्तिस्तोत्रे)

तेजःस्वरूपा परमा भक्तानुग्रहविग्रहा।
सर्वस्वरूपा सर्वेशा सर्वाधारा परात्परा ॥१॥
सर्वबीजस्वरूपा च सर्वपूज्या निराश्रया।
सर्वज्ञा सर्वतोभद्रा सर्वमंगल-मंगला ॥२॥[1]

मार्कण्डेयपुराणे सर्वजगतां हेतुत्वमभिहितम्। दुर्गास्तोत्रे—

हेतुः समस्तजगतां त्रिगुणापि दोषै-
र्न ज्ञायसे हरिहरादिभिरप्यपारा।
सर्वाश्रयाखिलमिदं जगदंशभूत-
मव्याकृता हि परमा प्रकृतिस्त्वमाद्या ॥१॥[2]

गीतायामपि भगवताऽध्यक्षप्रकृतिरेवजगत्प्रसौति तथा च तत्र च

मयाध्यक्षेण प्रकृतिः सूयते सचराचरम्।
हेतुनानेन कौन्तेय जगद्विपरिवर्तते ॥१॥[3]

अन्यच्च—प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपि।[4]
भागवते च— दैवात् क्षुभितधर्मिण्यां स्वस्यां योनौ परः पुमान्
आधत्त वीर्यं सासूत महत्तत्त्वं हिरण्मयम् ॥१॥[5]

सौन्दर्यलहरी स्तोत्रे भगवता शंकरेणापि शिवशक्त्योरद्वैतमोक्तम्। तथा च—

शिवः शक्त्या युक्तो यदि भवति शक्तः प्रभवितुं
न चेदेवं देवो न खलु कुशलः स्पन्दितुमपि।
अतस्त्वामाराध्यां हरिहरविरिञ्च्यादिभिरपि
प्रणन्तुं स्तोतुं वा कथमकृतपुण्यः प्रभवति ॥१॥[6]

शाक्ता एवास्या उपासकाः भवन्ति तथा च भागवते

---

१ ब्रह्मवैवर्तपुराण प्रकृतिखण्ड ।६६।६-१०
२ मार्कण्डेय पुराण ... दुर्गास्तोत्रे ८१।०
३ गीतारत्नम् ९।१०
४ गीतारत्नम् १३।१९
५ भागवते ... ३।२६।१९
६ सौन्दर्यलहरी श्लोक १ ...

नामधेयानि कुर्वन्ति स्थानानि च नरा भुवि ।
दुर्गेति भद्र कालीति विजयावैष्णवीति च ॥१॥[1]

मार्कण्डेय पुराणे सप्तशतीस्तोत्रे च—

इत्थं यदा यदा बाधा दानवोत्था भविष्यति
तदा तदावतीर्याहं करिष्याम्यरिसंक्षयम ॥१॥[2]

देवीभागवतमुहुर्मुहुरनया ब्रह्मणोऽभेद कथित ।

एकमेवाद्वितीयं यत् ब्रह्मावदा वदन्ति वै ।
सात्व किं वाप्यसौ वाकि संदेह विनिवर्तय ॥१॥[3]

अस्यात्तरमपि तत्र व

सदैकत्व न भेदोऽस्ति सर्वदैव ममास्य च ।
योऽसौ साऽहमहयो सौ भेदोऽस्ति मतिविभ्रमात ॥१॥[4]

तन्त्र ग्रन्थ कर्त पण्डितोमानाथोऽपि ।

यस्या दृष्टानव भूमण्डलाशो
यस्या दासोविद्यत नाक्षितीश ।
यस्यानात नवशास्त्र किमन्य
यस्याकार सा पराशक्तिरेव ॥१॥[5]

प्रकृतिरूपा शक्तिरपि नित्या तदभावेब्रह्मणोऽभिव्यक्तिरसम्भवान तथा च प्रपंच सार—

प्रकृति पुरुषश्च नित्यौ कालश्च[6]

इय भगवती नित्यापि देवाना कार्य सिद्ध्यर्थमाविर्भवति । दुर्गा-स्तोत्रे

देवाना कार्यसिद्ध्यर्थमाविर्भवति सा यदा ।
उत्पन्नेतितदालोके सा नित्याप्यभिधीयत ॥१॥[7]

देवीभागवतेप्रकृतिरूपेणाख्याना—

एषाभगवती देवी सर्वेषा कारण हि न ।
महाविद्या महामाया पूर्णाप्रकृतिरव्यय ॥१॥
दुर्गानेयाऽल्पधिया देवी योगगम्या दुराराध्या

---

१ भागवते ९।२।१२
२ मार्कण्डेयपुराण ९१।५१। मनसुखराय मोर रोड कलकत्ता २०१८
३ देवीभागवते ८।३।४१ मनसुखराय मोर रोड कलकत्ता २०१७
४ तत्रैव ३।६।२
५ कल्याणके गीताप्रेस गोरखपुर १९८१ पृ० २६१
६ प्रपंचसार १।२१
७ मार्कण्डेय पुराण ८१।४८

इच्छा परात्मन काम, नित्यानित्य-स्वरूपिणी ॥२॥[1]

योगवासिष्ठे भगवान् वसिष्ठोऽपि, आह।

नान शक्ति क्रियाशक्ति कमता कतृ तापिवा।
इत्यादिकाना शक्तीना अन्तोनास्ति शिवात्मन ॥१॥
चिच्छवितब्रह्मणोत्र शरीरष्वपिदृश्यते।
स्पन्दशक्तिश्चर्वातपु जडशक्तिस्तथोपले ॥२॥[2]

भगवत्या साकाररूप विभिन्नदेवीना विभिन्न प्रकारेण रूप-कल्पना तथा च मार्कण्डेये—

सरथस्थस्तथात्युच्च गहीतपरमायुध।
भुजरष्टाभिरतुलर्व्याप्याशेषबभौनभ ॥१॥[3]

देवीभागवते सहस्र भुज वणनम। देवी स्तोत्रे—

सहस्रनयनारामा सहस्रकर-सयुता।
सहस्रवदना रम्या भातिदूरादसशया ॥१॥[4]

तुलना-सहस्र शीर्षा पुरुष सहस्राक्ष सहस्रपात (यजुर्वेद)

दश भुजा भगवतीरूपे महाकाली स्वहस्तेपु खडगचक्र गदेपु चाप परिघभुशुण्डी शिर शरान धारयति त्रिनयना च। नीलाश्मद्युतिस्तथा च ध्यान श्लोके—

खडग चक्रगदेपु चाप परिघान शूलभुशुण्डी शिर।
शखस दधतीकरस्त्रिनयना सर्वांगभूषा वृताम।
नीलाश्म द्युतिमास्य पाददशका सवन्महाकालिकाम।
यामस्तौत्स्वपितेन्द्री कमलज हन्तु मधु-कटभम् ॥१॥[5]

महालक्ष्मी च स्वस्वरूप-अक्षमालापरशुगदाशर वज्रपदम धनु कुण्डिका दण्डशक्ति खडगादीनि हस्तपु धारयति। तथा च दुर्गाया ध्यान श्लोके—

अाम अक्षस्रक्परशु गदपु कुलिश पदम धनु कुण्डिका
दण्ड शक्तिमसि च चमजलज घण्टा सुराभाजनम्।
शूल पाश सुदर्शने च दधती हस्त प्रसन्नानाम्।
सेवेसरिभमर्दिनीमिह, महालक्ष्मा सरोजस्थिताम ॥१॥[6]

---

१ देवीभागवते ३। ।२१ ८२ मनसुखराय (कलकत्ता) २०१७
२ योगवासिष्ठे ६।३७।१६ तथा ६।१ ७।७
३ मार्कण्डयपुराणे ८६।१६
४ देवीभागवते देवीस्तोत्रे ३।८।४८
५ दुर्गासप्तशती स्तोत्रे गीता प्रेस गोरखपुर २ १५—प्रथमाध्याये ध्यानश्लोक प ६४
६ तत्रैव ध्यानश्लोके ८२ न्तीयाध्याये

महासरस्वती च—घण्टा शूल-हल-शंख मुसलानीनि धारयति वीणा पुस्तकधारिणी च ।

घण्टाशूलहलानिशंखमुसलेचक्रधनुः सायकं
हस्ताब्जैर्दधती घनान्तविलसच्छीतांशुतुल्यप्रभाम्
गौरीदेहसमुद्भवां त्रिजगतामाधारभूतां महा-
पूर्वामत्र सरस्वतीमनुभजे शुम्भादि दैत्यार्दिनीम् ॥१॥[१]

शाक्तप्रमोदे देवीरहस्ये तन्त्रागमादिषु दशमहाविद्या प्रोक्ता तासां स्वरूपाणि पृथक्-पृथक् । तत्र काली चतुर्भुजा शवारूढा तथा च कालीतन्त्रे—

शवारूढां महाभीमां घोरदंष्ट्रां हसन्मुखीम् ।
चतुर्भुजां खड्गमुण्डवराभयकरां शिवाम् ।
मुण्डमालाधरां देवीं ललज्जिह्वां दिगम्बराम् ।
एवं सञ्चिन्तयेत्कालीं श्मशानालयवासिनीम् ॥१॥[२]

एवमेव तारा-षोडशी-भुवनेश्वरी छिन्नमस्ता दक्षिणामूर्ति धूमावती-मातंगी-बगलादिदेवीनां ध्यानात्मिका देवी रहस्यशाक्तप्रमोदतन्त्रागमादिषु प्रसिद्धम् । तासु प्रायः सर्वा रुद्रस्य विभिन्न रूपाणां शक्तयः । धूमावती विधवा वर्णिता । तस्याः स्वरूपम् च विवर्णा मलिनवस्त्रा च सा तथा धूमावती-तन्त्रे ।

विवर्णा चंचला दुष्टा दीर्घा च मलिनाम्बरा ।
विमुक्तकुन्तला व सा विधवा विरलद्विजा ॥१॥[३]

वाहनं चास्याः सिंहः । तथा च—

बालाभामा कराभरविकृतमयदामौलिबद्धेन्दुरेखाम्
शंखचक्रबाणं त्रिशिखमपि करैरुद्वहन्तीत्रिनेत्राम् ।
सिंहस्कन्धाधिरूढ़ा त्रिभुवनमखिलं तेजसा पूरयन्तीम् ।
ध्यायेद्दुर्गाजयाख्यां त्रिदशपरिवृतां सेवितां सिद्धिकामः ॥१॥[४]

प्रकृतत्वे चास्याः त्रिनेत्राणि चन्द्रसूर्यवह्नयः चतुर्भुजा वत्सो दिशः । सिंहश्च स्वयमेव विष्णुः । तथा च वनदुर्गारहस्ये ।

अधुनासम्प्रवक्ष्यामि सिंहस्य च यथोचितम् ।
सिंहस्त्वं हरिरूपाख्यो स्वयं विष्णुर्न संशयः ॥१॥
पार्वत्या वाहनत्वं हि अतस्त्वां पूजयाम्यहम् ।[५]

---

१ दुर्गासप्तशती स्तोत्र ध्यानश्लोक ११७ पंचमाध्याये ।
२ शाक्तप्रमोदे काण्ड २ ८ श्रीरामनन्दन दत्त सिंह कालीतन्त्रे ध्यानश्लोके प० ३
३ तत्रैव धूमावती स्तोत्रे १ प० २८१
४ सप्तशती स्तोत्रे गीता प्रेस गोरखपुर प० १०३
५ श्रीहरिविलासे पत्र सनातन मिश्र पन्ना २०१५ प १३४

महिषश्च शिवरूपो तथा च कालीतन्त्रे—

अधुनासम्प्रवक्ष्यामि महिषस्य च पूजनम्।
महिषस्त्व महावीर शिवरूपी सनातन ॥[१]

एवं च श्रुति स्मृतिपुराण दर्शनादिषु सवत्र लब्धप्रसरेयं बौद्धोत्तर युगीना कथमिति विरम्यते।

६ मन्त्र गायत्र्यादीनि—

एकस्या एवदेव्या विभिन्ननाम रूपाया गायत्रय विभिन्न ग्रन्थेषु विभिन्न रूपेणोपलभ्यन्ते। तथा च—

१ कात्यनाय विदमहे कन्या कुमारि धीमहि तन्नो दुर्गि प्रचोदयादिति' महानारायणोपनिषदि।[२]

२ महाशूलिन्य विदमहे महा दुर्गाय धीमहि तन्ना भगवती प्रचोदयादिति'[३] अपि तत्रैव।

३ सुभगाय विदमहे काल-मालिन्य धीमहि तन्नो गौरी प्रचोदयादित्यपि[४] तत्रव।

४ महादेव्य विदमहे विष्णु-पत्न्य च धीमहि तन्नो लक्ष्मी प्रचोदयादिति।"[५]

५ कालिकाय विदमहे श्मशान-वासिन्य धीमहि तन्नो घोरा प्रचोदयादिति।[६] (कालिकाया)

६ महालक्ष्म्य च विदमहे विष्णु पत्न्य च धीमहि तन्नो लक्ष्मी प्रचोदयात[७] (लक्ष्मीगायत्री)

७ महालक्ष्म्य च विदमहे सवशक्त्य च धीमहि तन्नोदेवी प्रचोदयात।[८] (महादेवी गायत्री)।

८ ओम सव सम्मोहि य विदमहे विश्वजनन्य धीमहि तन्नो शक्ति प्रचोदयादिति[९] (शक्तिगायत्री)।

९ ओम त्वरितायन्य विदमहे महानित्याय धीमहि तन्नो देवी प्रचोदयादिति[१] (त्वरिताया)।

---

१ काली विलासतन्त्र १९१७ १८।१९
२ महानारायणोपनिषदि विमलानन्द मसूर प ५४
३ तत्रव प० ५५
४ तत्रव प ५६
५ महानारायणोपनिषदि विमलानन्द मसूर त आगमनाम्ना।
६ तत्रव
७ ऋक्परिशिष्ट २।११।२६
८ १० तन्त्रसारे श्रीकृष्णानन्द वागीश चौ वाराणसी १९३८ प० ४९

१० 'ग्राम ऐवागस्वयर्यै विदमहे वली वामेदवर्यै धीमहि सोस्त नो शक्ति प्रचोन्यात'[१] (वालागायत्री)।

११ ग्रा एेत्रिपुरादेव्य विदमट्वली नामेश्वर्यै च धीमहि सौरस्त न क्लि ना प्रचो दयात'[२]

१२ "ग्रो त्रिपुराय विदमहे भैरय च धीमहि त ना दवी प्रचो दयात्।'[३]

१३ ग्रा महादेव्य विदमहे दुगाय च धीमहि त नो गौरी प्रचोदया दिति।'[४] (जय दुर्गा गायत्री)।

१४ 'ग्रोम नारायराय विदमहे महाश्रिये धीमहि त न श्री प्रचो-दयात'[५] (श्री गायत्री)।

१५ 'ग्रोम् वाग्दव्य विदमहे कामराजाय धीमहितन्नो देवी प्रचो दयात'[६] (सरस्वत्या)।

१६ ग्रोम भगवत्यै विदमह माहेश्वर्य्यै धीमहि त नोऽन-पूर्णा प्रचो दयात्"[७]

१७ "ग्रोम महिषमर्दिन्य विदमह दुर्गाय धीमहित नो देवी प्रचोदया दिति'[८] (महिषमर्दिनीगायत्री)।

१८ 'ग्रोम वरोचन्यै विदमहे छि न मस्ताय धीमहि त नो देवी प्रचो-दयात[९] (छिन्नमस्तागायत्री)।

१९ 'ग्रोम कालिकाय विदमहे महोग्रायै धीमहि त नो देवी प्रचो दयात[१०]।

२० 'ग्रोम ताराय विदमह महोग्राय धीमहि त नो देवी प्रचोदयात[११] बीजम (ह्रीमिति) तथा च त त्र सारे।

अथ वक्ष्यजगदधात्रीमधुना भुवनेश्वरीम्।
ब्रह्मादयोऽपि यानात्वा लेभिरे परमाश्रियम॥१॥
न कुलीशोग्निमारुढ वामनेत्रो वध द्रव
बीजतस्या समाख्यात सवितासिद्धि-दायिनि॥२॥

नकुलीना हकार ग्रग्नि रेफ वामनेत्रमूर्ति ग्रदच द्रोऽनुस्वार।[१२] तथा च (ह्री)।

द युपनिषदि च स एवाथ कथितस्तथा च—

---

१६ तन्त्रसार श्रीकृष्णान द वागीश चौ॰ वाराणसी १९३८ पृ॰ ४६
७ तन्त्रसार वाराणसी, १९३८।४६
२११ तदर पृ॰ ६६ ७०
१२ तत्रैव, पृ॰ ८४

वियदीकारसंयुक्तं वीतिहोत्रसमन्वितम्।
अर्द्धेन्दु-लसितं देव्या बीजं सर्वार्थ साधकम् ॥१॥
एवमेकाक्षरं ब्रह्म, यतयः शुद्ध चेतसः।
ध्यायन्ति परमानन्दमया ज्ञानाम्बुराशयः ॥२॥[1]

वियदाकारा (ह्) वीतिहोत्रोऽग्नि (र) अर्द्धचन्द्र ( ) एवं च (ह्रीं) इदं देव्या बीजं सर्वार्थदम् प्रणवसमम् इममन्त्रं शुद्धचेतसः यतयः ध्यायन्ति। अस्यार्थ इच्छा ज्ञानक्रियाधाराद्वताखण्ड सच्चिदानन्द भूतशिवस्य शक्तिविस्फुरण मिति।

मन्त्रश्च— ओं ऐं ह्रीं क्लीं चामुण्डायै विच्चे तथा च देव्युपनिषदि—

वाङ्मायाब्रह्मसूस्तस्मात् षष्ठं वक्त्र-समन्वितम्।
सूर्यो वाम-श्रोत्रबिन्दु संयुक्तष्टात्तृतीयकः ॥१॥
नारायणेन संमिश्रो वायुश्चाधारयुक्ततः।
विच्चेनारायणकोऽडवायुः स्यान्महदानन्द दायकः ॥२॥[2]

वाग्वाणी ऐं माया 'ह्रीं ब्रह्मसूः काम 'क्लीं तत षष्ठ वर्णोऽकारयुक्त इच सूर्ये म श्रवामश्रोत्र दक्षिणकणम (उ) बिन्दुयुक्त (मुं) टात्तृतीयो ड' नारायणेनाकारेण युक्त (डा) वायु (य) अधर (ए) तनयुक्तो विच्चे। अन्तेर्गोमन्त्रश्च— ओं ह्रीं दुं दुर्गायै तथा तन्त्रसारे—

अथ दुर्गामनूम् वक्ष्य दृष्टादृष्टफल प्रदम्।
मायारि कर्णबिन्द्वाढ्यो भूयोऽसौ स्वयवान्भवेत् ॥१॥
पचान्तकः प्रतिष्ठावान्, मारुतोमौतिकासनः।
तकारादि हृदयान्तोऽयं मन्त्रोवस्वक्षरात्मकः ॥२॥
तारा माया स्ववीजं च दुर्गायहृदयं ततः ॥[3]

अद्धकार कर्ण उकार, पचान्तक गकार प्रतिष्ठा आकार मारुतो यकार, मौतिक एकार ॥'

## (ख) विशिष्ट स्तोत्राणि (३१)

१ अन्नपूर्णा स्तोत्रम्—

अन्नपूर्णाभगवती परत्वात्तदेव नाम उपक्रमोपसंहारयोश्चेदमेवनाम।[4] 'अन्नपूर्णा-स्तोत्रम्।

---

१ देव्युपनिषदि १८ १९
२ देव्युपनिषदि २०
३ तन्त्रसार पृ० ९७ वाराणसी १९३८
४ बृहत्स्तोत्ररत्नाकरे खेमराज श्रीकृष्णदास बम्बई, पृ २३२। सं० १९८२

"इतिश्रीमच्छङ्कराचार्य विरचितमन्नपूर्णाष्टकस्तोत्रम् । अत्राष्टकमित्यधिक पदम । शकरग्रन्थावल्याचेदमेव नाम ।

शकराचार्य रचितम । श्लोकसख्या १२ । बृहत्स्तोत्र—रत्नाकरयो शकर ग्रन्थावल्याच ।

भगवतामाचार्याणाम कृतौ कापि नर्सगिकी प्रतिभाहृदयाह्लादकारिणी मनो मुग्धकारिणी शली सगीतप्रवाहमयी जनयतिकामप्यभिनवामभिख्यामनिर्वचनीयाम । रचयितुभावमभिमाश द प्रवाहितोच्छलतीव । सानुप्रासा दीर्घ समासाऽपि सरला ' भिक्षा देहिनमोऽस्तुते पदयुताऽप्यनानम्बिनापि श्रोतुहृ दयानावजयति ।

नित्यान दकरी वराभयकरी सौ दयरत्नाकरी,
निधू ताखिलघोर-पावनकरी प्रत्यक्षमाहेश्वरी ।
प्रालेयाचलवशपावनकरी काशीपुराधीश्वरी
भिक्षादेहि कृपावलम्बनकरी मातान्नपूर्णेश्वरी ॥१॥

अत्र भगवती अन्नपूर्णाऽभयकरी मोक्षकरी विश्वेश्वरी च कथिता । तथा च—

क्षत्र त्राणकरी महाभयकरी माता कृपा सागरी,
साक्षान्मोक्षकरी सदा शिवकरी विश्वेश्वरी श्रीधरी ।
दक्षा न्द करी निरामय-करी काशी पुराधीश्वरी,
भिक्षा देहि कृपावलम्बन-करी मातान्नपूर्णेश्वरी ॥[3]

२ आर्या स्तव —

आर्यायाः भगवत्या स्तोत्रस्वादेतदवनाम । पुराणचदनाम[4] "आर्यास्तवप्रवक्ष्यामि यथोक्तमृषिभि पुरा । [5]

हरिवशे विष्णुपर्वणितृतीयऽध्याय प्रथमश्लोकमारभ्य ३५ तम यावत ३५ श्लोका वशम्पायनोऽत्रप्रवक्ता ।

इमस्तव प्रात य पठेत । स काक्षित लभते । त्रिभिर्मासै नणा घोरबन्धन पुत्रनाश धनक्षय व्याधिमृत्युभय सवशाम्यति सर्वार्थ सिद्धि च नरो लभते । तथा च—

इम स्तव दिव्यमिति व्यासप्रलपितम् ।
य पठेत्प्रातरुत्थाय शुचि प्रयतमानस ॥१॥

---

१ शकर ग्रन्थावल्यां २१ सस्करण ११ सम्पु
२ तत्रव ९
३ तत्रैव १०
४ हरिवशपुराणे (पूना १९३६ ई ) त्रीयकटीयतम स० १६१
५ हरिवशपुराणे (पूना १९३६ ई०) २८ वि पव ३।१

त्रिभिर्मासै काङ्क्षितं च फलं व सम्प्रयच्छति।
षडभिर्मासैः वरिष्ठंतु वरमेव प्रयच्छसि ॥२॥[१]

अत्रानुष्टुप छन्दसा विविधनामपदं सरलयामापया सानुप्रासया सप्रसादया भगवत्या कीर्तनम। भगवतीसिद्धसेनस्य जननी सवत्र पवत नदीगुहासु वसति। सवथा लोकान सृजति विभिन्ननामानि भजते स्त्रीवाचका शब्दा अस्या एव नामान्तराणि अनया सव जगत स्थावर व्याप्तम। तथा च—

त्वया व्याप्तमिदं सर्वं जगत्स्थावर-जङ्गमम्।
सङ्ग्रामेषु च सर्वेषु अग्नि प्रज्वलितेषु च
नदीतीरेषु चौरेषु कान्तारेषु भयेषु च ॥[२]

३ इन्द्रकृत-दुर्गा स्तोत्रम—

यत इन्द्रेण भगवत्या दुर्गाया स्तोत्रं कृतमतः तदेव नाम उपक्रमोपसहार योरपीदमेव नाम तथा च स्तोत्रेणानेन तुष्टाव शिवां शंकर वल्लभामिति[३] 'पुनरावृत्ति रहितं स्तोत्रं जाप्यान्नसशय।[४]

सौर-पुराण ४६ तमऽध्याय ४५ तम श्लोकमारभ्य ६१ तम यावत। श्लोक सख्या १७। स्तोत्रकर्त्ता इन्द्र।

फलं चास्य त्रिविधदुःख निवृत्ति देवी-लोक प्राप्तिश्च। तथा च—

य इमां कीर्तयिष्यन्ति, जपमालां भवानि ते।
त्रिविधैरपि दुःखौघै मुच्यन्ते नात्र संशय ॥१॥[५]

अनुष्टुबछन्दोबद्ध सम्बोधनान्तपदयुतम् सगीतमभ्यासरण्या भगवत्या स्तवनम। तथा च—

जयदेवि महामाये जयत्रिदश वन्दित।
जयभद्रे विदहस्ये जयाद्य त्रिगुणात्मिके ॥१॥[६]

स्तोत्रस्यास्य सरला सानुप्रासा पौराणिकी प्रवाहमयी भाषा। सवसाधारण जनरपि सुबोधमिद स्तोत्र स्वरसभव्या जनानामोदयति।

४ उत्कण्ठा दशकम—

यतोऽत्रभगवत्याराधायावणनमुत्कण्ठायुतरूपेण। पुस्तकस्यापक्रमोप सहारयोरिदमेवनाम। तथा च— उत्कण्ठा दशकम[७] अन्ते च इति श्री रघुनाथदासगोस्वामिविरचितस्तवावल्या श्रीउत्कण्ठादशकम सम्पूणम।[८]

---

१ तत्रैव २।३।८ ३२ तथा ३४
२ तत्रैव २।३।३५
३ सौर पुराण आनन्दाश्रम-पूना १८११ शा का शकाब्दे प १६। अध्याय ४६।४५
४ तत्रैव ४६।६१
५ तत्रैव ४६।५६ ६१
६ तत्रैव ४६।४६
७ श्रीस्तवकल्पद्रुमे वृन्दावन मथुरा २ १६ पृ० ६१३
८ तत्रैव, ६१४

रचयिता रघुनाथदास गोस्वामी श्लोका ११ स्तोत्रस्यास्य पाठनामीष्ट-प्राप्ति । तथा च तत्रैव—

उत्कण्ठाष्टकस्तवन नितरा नव्या निर्व्य स्वर
वृन्दारण्यमहेन्द्रपट्टमहिषी य स्तौतिसम्यक सुधी ॥१॥
तस्मप्राणसमा गुणानुरसनात सजातहर्षोत्सव ।
कृष्णोऽनघमभीष्टरत्नमचिरादतत स्फुटयच्छति ॥२॥[1]

शार्दूल विक्रीडित छन्दावद्धेदीघसमासमयम्त्र स्तात्रे भाषाया सौन्दय युनानुप्रासछटा दर्शनीया । उत्कण्ठिताया दध्या समादरे कृतोत्कण्ठ कविरपि, उत्कण्ठित इव लक्ष्यत । राधा कदाहं भजे इति मुहुर्मुहुर्दिगरन कविस्ता-दात्म्यावस्थापन इव । पन्दाय्यावणमत्री रचना चातुरी गुम्फन-सौष्ठवादीनि मनोहरन्ति । तथा च—

छिन्नस्वणविनिन्दचिक्कण रचिस्मेराक्य मण्डित
रक्तारक्त सुचीनपट्टवसनावेनेन विभ्राजिताम ।
उदघूर्णोच्छलित कण्ठपिच्छ विलसद्वेणीमुकुन्द मनाक
पश्यन्ती नयनाचलेन मुदिताराधा कदाहं भजे ॥१॥

अत्रोत्कण्ठिताया मूर्ति पुर स्फुरन्ती दश्यते । मनाकशब्देनात्रोत्कण्ठिताया सा शक्य व्यज्यत ।[2]

५ चण्डिका स्तोत्रम्—

यतोऽत्र चण्डिकाया स्तवनम । सूच्यामिदमेव नाम ।[3] 'अथ चण्डिका-स्तोत्रम्' पुष्पिकाया च ।

'इति श्री हृ०वद्द धर्मोपासना-स्तवके श्री दुर्गोपासना-कल्पद्रुमे मार्कण्डेय विरचिते चण्डिका स्तात्र निरूपण नाम प्रकरणम'[4] श्लोका १२

स्तोत्रस्यास्य पाठेन सव पाप निवृत्ति-पूवकम स्वेष्ट प्राप्तिस्तथा च ।

इत्यव बीजमन्त्र स्तवनमतिशिव पातक-व्याधि-नाश
प्रत्यग्र दिव्य रूप ग्रहगणमथने मदन शाकिनीनाम
इत्यत्र वगवेग सकलभयहर मन्त्र शक्तिश्च नित्यम
मन्त्राणा स्तोत्रकं य पठति स लभते प्रार्थिता मन्त्र सिद्धिम ।[5]

तानि रमतदादावत्र ध्यान रूपेण दुरित नाशायाभ्यथना । तानिव रीत्या श्रा ह्री क्लो क क व पद स्तवन विचित्रयोज सम्पलितयामापया विघ्न-ध्वस प्राथना रौद्र वीरमूर्ती मममभिवायात । तथा च ।

१ तत्रव ११
२ श्रीस्तवकल्पद्रुम वृन्दावन मथुरा २ १६ प० ११
३ वहत्ज्योतिषाणवष्टम धमस्कन्ध उपासना स्तवके १२८ अ० दुर्गोपासना कल्पद्रुमे
४ तत्रव प० ४८, ४८
५ तत्रव, श्लोक १२

भ्रमसि जगदिय भक्षयन्ती ग्रसती हुकारोच्चारयन्ती
प्रहतदुरित चण्डमुण्डप्रचण्डेति ।[१]

सानुप्रासाभाषा काली कपाली चामुण्डति पद्यानिजनानावण-कुहरम भिव्याप्य प्रत्यग्रतोमय निवारण कुवन्तीव । सर्वासा दवीना बीज चण्डिकेति तथा च—

त्व ब्राह्मीत्व च रौद्री त्व च शिखिगमनात्व देवी कुमारी ।
त्व चक्री चक्रहस्ता घुरघुरितरवा, त्व वराह-स्वरूपा ।
रौद्रेत्व चमर्मुण्डा सकलभुवितले, सस्थिते स्वगमार्गे ।
पाताल शलशृगे हरि हरनमिते देवि चण्डि नमस्ते ॥१॥[२]

६ जाड्यापहास्तोत्रम—

पुस्तके धत नाम । यत स्तोत्रे जाडयस्यवुद्धिमान्द्यस्य प्रमुखत्वेन चर्चितस्तदेव नाम । नाम्नोऽस्य निर्देश स्तोत्रेऽपि तथा च—

स्तोत्र जाड्यापहृदिय प्रातरुत्थाय य पठत ।[३]

गग-सहितायाः पचमेभागे (खण्ड) २२तमेऽध्याय ४१तम श्लोकत ८५ तम यावत । श्लोकाश्च ५ । स्तोत्र-वक्ता नारद ।[४]

यथा-नाम तथा गुण इतिरीत्याऽस्य स्तोत्रस्य पाठस्य फलतु निखिलाज्ञान-निवत्तिबुद्धिमान्द्यादिविनाशश्च । तथा च तत्रव—

स्तोत्र जाड्यापहृदिय प्रातरुत्थाय य पठेत ।
नारदोक्त सरस्वत्या स विद्यावान्भवेन्हि ॥१॥[५]

यद्यप्यत्रस्तोत्र श्लोकाना सख्या तु पचवपरमतीवप्रभावशालीदम । भगवत्या सरस्वत्या स्तोत्रमिदमगवत्या स्वरूप-वणन तत्र च वणमत्री, शब्द योजना वणन्नदयोरनुप्रासता प्रसादगुणितादि विषया सराहनीया इति । भगवती सरस्वती केयूर किरीट कंकणधारिण्युक्ता । नूपुर राजिता वीणा पुस्तक धारिणी । तथा च—

वराभयपुस्तकवल्लवीयुत
पद्म दधाना विमले करद्वये ।
नमाम्यह त्वा शुभदा सरस्वतीम्
जगन्मयी ब्रह्म मयी मनोहराम ॥५॥[६]

---

१ तत्रव श्लोक १
२ वृहत्स्तोत्रिणाण वेऽन्टमष्टमस्कन्धे उपासना स्तवके श्लोक २
३ गर्गसंहितायाम् गंगाविष्णुदास मुम्बई पृ० ३५४६
४ तत्रव ५।२२।४८
५ तत्रव
६ तत्रव ५।२२।४३

७ दुर्गा कवचम—

सूच्यामिम्मेव नाम[1] ब्रह्माण्ड मोहनमस्यापरनाम । तथा चान्ते—

इति श्री ब्रह्मवैवर्तमहापुराण प्रकृतिखण्ड नारदनारायण-सम्वादे ब्रह्माण्ड मोहन कवच नाम सप्तषष्ठितमोऽध्याय ।[2]

ब्रह्मवैवर्ते २ये खण्डे ६७ तमऽध्याये १मश्लोकमारभ्य २७ तम श्लोक यावत । नारद प्रतिनारायण आह ।

कवचस्यास्य धारणेन सर्वतीर्थयात्रयापृथिव्या भ्रमणेन च यत्फल लभ्यते तत्फल लभते । सिद्धे कवचे नर. पुत्रपौत्रादियुतो भवति । तद्गेहलक्ष्मी स्थिरा भवति । तथा च—

कवच धारयेद्यस्तु सोऽपि विष्णुर्नसशय ।
स्थाने च सर्वतीर्थाना पृथिव्याश्च प्रदक्षिणे ॥१॥
यत्फल लभते लोकस्तदेव धारणा मुने ।
पचलक्ष जपेनैव सिद्धमेतद् भव मुने ॥२॥[3]

स्तोत्रस्य भाषा सरला पौराणिकी । प्रवाहमयी अनादौ परम्परा कथन ततोऽगन्यासकरन्यासादिकम । ततोदिग्रक्षणम् । फल चान्ते ।

८ दुर्गा-कवचम—

यतोऽत्रदुर्गाया वर्णनम । सूच्यामुपनमऽध्यायान्ते चेदमेव नाम ।[4] तथा च—

शृणु नारद वक्ष्यामि दुर्गाया कवच शुभम ।[5]

अध्यायान्तेचास्य नाम दुर्गतिनाशिनीकवचम ।[6] तथा च—

इतिश्री ब्रह्मवैवर्ते महागणपति खण्डे नारद-नारायण सम्वादे दुर्गति नाशिनी कवच-नामकोन चत्वारिंशोऽध्याय ॥[7]

ब्रह्मवैवर्ते तृतीय खण्डे ३६ तमेऽध्याय ३५ श्लोकमारभ्य २३ तम यावत । श्लोका २० । नारायणो वक्ता नारद श्रोता ।

सर्वतीर्थव्रतादिभियत्फल प्राप्यते तत्फल लभतेऽस्य धारणात अज्ञात्वा शतलक्ष प्रजप्तोऽपि न सिद्धि-दायकम् । तथा च—

सुस्नात सर्वतीर्थेषु, सर्वयज्ञेषु यत्फलम ।
सर्वव्रतोपवासे च तत्फल लभते नर ॥१॥

---

१ ब्रह्मवैवर्ते दिल्ली विश्वविद्यालयीय पुस्तकालय (बाम्बे) पृ० ५

२ तत्रैव पृ ३१२

३ तत्रैव २।६७।१६ १६

४ तत्रैव पृ० ६

५ ब्रह्मवैवर्तपुराण ।.८६।१३

६ तत्रैव प ४११

७ तत्रैव ४१२

इद कवचमज्ञात्वा भजेद दुर्गानिनाशिनीम।
शतलक्ष प्रजप्तोऽपि न मन्त्र सिद्धिदायक ॥२॥[1]

स्तोत्रमिद पुराब्रह्मा शकराय ददौ त्रिपुर सग्रामे हरश्च गौतमाय स च पद्मनाभाय। गायत्र्य छन्द ब्रह्माण्ड विजयमस्यापर नाम। विनियोगस्ततोऽग यास कर यासादिकम। दिग्रक्षण च। सरला सुबोधा चात्रभाषा प्रवाहमयी पौराणिकी शली।

९ दुर्गाब्रह्म कवचम—

यतोऽत्र ब्रह्मप्रोक्त दुर्गा कवचमितितदेवनाम। सूच्या[2] स्तोत्रादौ पुस्तके धतमिद नाम। तन्नादौ दुर्गा ब्रह्मकवचम [3] पुष्पिकाया च हरिहर-ब्रह्मविर चित देव्या कवचम।[4]

वाराहपुराणत दुर्गोपासना कल्पद्रुमे उदधृतम। श्लोक सख्या ५६।
फल चास्य स्तोत्रस्य नित्य पाठेन प्रसादि-बाधा नाशित। तथा च तत्रव—

ब्रह्मराक्षस वेताला कुष्माण्डाभरवादय
नश्यन्ति दशनादस्य कवच हृदि सस्थित ॥१॥
मानोन्नतिभवेद्राज्ञस्तेजोवद्धिकरपरम।
यशसा वद्धत सोऽपि कीर्तिमण्डित भूतले ॥२॥
देहान्ते परम स्थान यत्सुररपि दुलभम।
प्राप्नोति पुरुषो नित्य महामाया प्रसादत ॥३॥[5]

परम प्रसिद्धमिदमास्तिक जगति देवी भागवत। च पठित दुर्गा सप्त शत्या आदौ विधीयत। तन्नादौ नव दुर्गा नाम कथन ततोदिग्रक्षण। कारागारक्षा परम। अन्ते च फल कथनम। अनुष्टुप्छन्द सरलाभाषा सप्रसादा सानु प्रासा। प्रवाहमयी शली। देव्या प्रभाववणनात्मिका। तत्तन्नामप्रसगऽस्या रूप शक्तिश्च प्रदर्शिता। यस्या दिश योऽधिन्वीसव तस्या रक्षिका प्राच्या रक्षतुमामन्द्री इन्द्र प्राच्या अधिपति। ऐन्द्रीचाधीश्वरी।

१० दुर्गाष्टोत्तरशतनामस्तोत्रम—

भगवत्या दुर्गाया अष्टोत्तर शतनामानीतितन्वनाम। सूच्याम[6] उपक्रमे अथ दुर्गाष्टोत्तर शत-नामस्तोत्र।[7] अन्त च ' श्री दुर्गाष्टोत्तरशतनामामक

१ तत्रैव ३।३६।१६ २२
२ दुर्गोपासना कल्पद्रुम प ५
३ तत्रव १६२
४ तत्रव १६४
५ दुर्गोपासना कल्पद्रुम ५२ ५३ ५४ श्लोका
६ तत्रव पृ १—शाक्तप्रमोद (देवनन्दन सिंह) २००८ मम्बई, ४२६ पृष्ट
७ तत्रव प० १८

स्तोत्र निरूपण नाम प्रकरणमिति ।[१]

विश्व सारतन्त्रनाम्नाऽद्भुतम । ईश्वर नारदीय प्रोक्तम इत्यादि १६ शाक्तप्रमोदेऽप्युक्तम ।[२]

पञ्चास्याष्टोत्तरशतनामस्तोत्रस्य पाठेन चतुर्वर्गप्राप्तिरसाध्य नहि किमपिनास्ति तथा च तत्रैव—

नासाध्यं विद्यते देवि त्रिषु लोकेषु पार्वति ।
धनं धान्यं सुतान् जायां हस्तिनमश्व च ॥१॥
चतुर्वर्गस्तथा चान्ते लभेन्मुक्तिं च शाश्वतीम ।
राजानो दासतां यान्ति राज्यश्रियमवाप्नुयात ॥२॥
भौमावस्यानिशाभागे चन्द्रे शतभिषागते ।
विलिख्यप्रपठन्स्तोत्रं स भवेत्सम्पदां पदम ॥३॥[3]

अनुष्टुपवद्धेऽत्र भक्तया दुर्गाया अष्टोत्तरशतनाम्ना कथनम् । बहूनिनामानि प्रसिद्धान्येव । अल्पसमासानि । गणनायराणि । तं शक्त्या भक्तिमत्त्व च द्योत्यते । सरला सानुप्रासा प्रवाहमयी भाषा । गुणातिशयापिसंनिचित नामानि यथा पटला रूपवती, सर्वा अष्टदशस्य एकत्र

ब्राह्मी माहेश्वरी चन्द्री, कौमारी वैष्णवी तथा ।
चामुण्डा चैववाराही लक्ष्मीश्च पुरुषाकृति ॥[४]

११ दुर्गा-स्तवराज —

सूच्यामिदमेवनाम । पुराणे स्वयंश्रीकृष्णो नामेदमाह ।[५] 'स्तोत्रराजप्रसारयामीति ।'[६]

ब्रह्मवैवर्ते ४थे खण्डे ८८ तमेऽध्यायप्रथम श्लोकमारभ्य ७१तम यावत । श्लोक-संख्या ७१ ।[७]

यानित्यमिदं स्तोत्रं पठति स शिवं पार्वतीं द्रष्टुं समर्थो भवति । अग्नि जलवायु-स्तम्भ कर्तुं प्रभुर्भवति । तथा च

सर्वसिद्धिं च लभते सिद्धस्तोत्रमवेद्यदि ।
दशायुतं जपनैव सिद्धस्तोत्रोभवेन्नरः ॥१॥
अग्निस्तम्भं जलस्तम्भं मृत्युस्तम्भमनस्तथा
अश्वमेध सहस्राश्च पृथिव्याश्च प्रदक्षिणता ॥२॥[८]

---

१ शाक्तप्रमोदे २० ॥ बाम्बे (राजदेव नन्दन सिंह) प० १६
२ तत्रैव प ४२६
३ शाक्तप्रमोदे २० ८ बाम्बे (राजदेव नन्दन सिंह) १४ १५ १७
४ तत्रैव ८
५ ब्रह्मवैवर्ते कृष्णखण्ड (वेंकटेश्वर प्रेस मुम्बई) श० १९६६ प ४
६ तत्रैव प० २ ६ ४।८८।३
७ तत्रैव पृ २०६ ४।८८।३
८ ब्रह्मवैवर्ते कृष्णखण्ड (वेंकटेश्वर प्रेस मुम्बई) स० १९६६—४।८८।६८ ६९

नन्द सव श्री कृष्णमहिमानमवनोक्यत'व कात पय तमिम स वाल बुद्ध्याऽम र्यदितिमोहमुपगत । श्रीकृष्णसतस्मै इद स्तोत्र प्राह अस्यैवप्रभावेण भगवानमहादेव त्रिपुर ह तु समर्थोबभूव । ब्रह्मा शवराय द त्तो[1] स च सनका दिम्य आह । अत प्रासरदिद स्तोत्रम ।

अनादौ स्तोत्रस्य महत्त्व प्रतिपादितम । तत स्तवनविधिरुक्त । 'स्नात पादौ च प्रक्षाल्य धत्वा धौत च वाससीमाचान्त कुशहस्तश्च शुचिविष्णु च सस्मरन्निति[2] अत्र भगवती दुर्गादुर्गतिनाशियुक्ता । विष्णुमाया नारायणी सनातनी नारायणी नित्यान दरूपा निर्गुणा सगुणा प्रकृति पुरुषरूपा परात्परा सावित्री कथितेति ।[3] एकवभगवती दुर्गा स्थानाद्याधारभदेनविभिन्ननाम्ना कथ्यते । सर्वा शक्तयोऽस्या एव जायन्ते ।

१२ दुर्गा स्तोत्रम—

दुर्गाया भगवत्या वर्णनात्तदेवनाम । सूच्यामिदमेव नाम ।[4] अध्यायान्ते पुष्पिकाया चेद नाम । तथा च—

इति श्री ब्रह्मवर्ते महापुराण प्रकृति खण्ड नारदनारायणसम्वाद दुर्गा स्तोत्र नाम पञ्च षष्ठितमोऽध्याय ।[5]

ब्रह्म ववर्ते २य खण्डे ६६ तमेऽध्याये १ श्लोकमारभ्य ३३ श्लोकयावत । श्लोकसंख्या २३ ।

पूजा काले स्तोत्रस्यास्य पाठा सिद्धिजायते वन्ध्या काकवन्ध्या मृत वत्सा वा वर्षमेक श्रुत्वा सुपुत्र लभत । कारागारा प्रमुच्यत । यक्ष्मापीडित गलत्कुष्ठी महाशूली रुजात रोगाद विमुच्यत । तथा च—

इत्यारभ्य श्रुत स्तोत्र दुर्गाया दुर्गनाशनम ।
पूजा कालेपठद्याहि सिद्धिर्भवति वाञ्छितम ॥१॥
वन्ध्या च काक वन्ध्या च मृतवत्सा च दुर्भगो ।
श्रुत्वा स्तोत्र वर्षमक सुपुत्र लभते ध्रुवम ॥२॥
कारागारे महाघोरे यो बद्धो दृढबन्धने ।
श्रुत्वा स्तोत्र मासमेक बन्धनान्मुच्यतध्रुवम ॥३॥
राजद्वारश्मशान च महारण्य रणस्थले ।
हिंस्रजन्तु समीपे च श्रुत्वा स्तोत्र प्रमुच्यते ॥४॥[6]

---

१ तत्रव ४।७७।६ ६३
२ तत्रव ४।८८।१४
३ तत्रव ४।८८।१५ १८
४ तत्रव [illegible]
५ ब्रह्मवर्ते प ३११
६ तत्रव २।६६।२६ २७, २८ १

चतुर्थोऽध्याय

# शिवस्तोत्राणि

## शिव

### १ शब्दार्थ

शिवस्य भगवत स्तोत्र चर्चा याम् शिव शब्दार्थ एव विवच्यते यथा-क्रमम् । तन्मूलकत्वाच्चार्थानामयेषाम् ।

शीधातो 'सर्वनिघष्वति' वन् प्रत्ययेननिपात्यतेऽय शब्द । शिव कल्याण विद्यतेऽस्य ष्यति अशुभमिति वा शेरते‌ऽवतिष्ठन्तऽणिमादयोऽष्टसिद्धयोऽस्मिन् ।[1] सायणस्त्वस्य शब्दस्याक्रूर सुखकरमितिचार्थमाह । तथा च—

शिवेन अक्रूरेण सुखकरेण शिवया कल्याण्या इष्टप्राप्ति-हेतु भूतया ।[2]

अन्याश्च व्युत्पत्तय

(क) शिवुकल्याणे धातोनिष्पादनेन कल्याण-कर शिवइत्यर्थ ।

(ख) शेते सर्वमस्मिन्निति, व्युत्पत्त्या शीङधातोर्वनि कृते सर्वव्यापक इत्यर्थ ।

(ग) निरुक्त 'शेव इति सुख-नाम शिष्यते वकारो नाम करण अन्त स्थान्तरोपलिंगी विभाषितगुण शिवमप्यस्य भवति ।' शिष्यत सुखावहो भवतीति फलितार्थ इति ।'[3]

(घ) 'नित्यनिर्गुणत्वात् शुद्धत्वात् शिव स्वनाम-स्मृतिमात्रेण पावयन् शिव इति शङ्कराचार्यो विष्णु सहस्रनाम भाष्ये ।[4] शीङ्गुणार्थ शेत सुखावहा लभ्यतऽनेन शिव 'नैतनेपासनेय स शिव' ।'[5]

(ङ) शिवमस्यास्तीति शिवयतिवा शिव तथा च महाभारते ।

---

१ हलायुधकोशे जोशी उ० प्र० प्रकाशन पृ० ६६२
२ अथर्ववेदे १।१३।४
३ निरुक्ते १०।१७
४ विष्णु सहस्रनामि शङ्करभाष्य-संहिते गीता प्रेस गोरखपुर २०१६, श्लोक १७
५ रामानुजभाष्ये, तत्रैव, श्लोके

'मनुष्यान शिवमविच्छन तस्मान्व शिव स्मत ।'[१]

(च) वष्टि अनवरत कामयत लोकहित य स शिव अत्र व्युत्पत्तौ वशि-कान्तौ धातो सिंह इव वण विपययण शिव इति ' यथा च पश्यकात कश्यप ।[२]

(छ) श्वयति सव जानाति सव व्याप्नोतीति स शिव

(ज) शेते सवकारण सहित जगदस्मिन्निति शिव सर्वाधार स्वय निराधार ।

(झ) शिष्यते प्रलयान तरमिति शिव [३] ऋग्भाष्य। तथा चक परिशिष्टे—

प्रादित्यवण तपसाज्वलन्त यत्पश्यामिगुहासु जायमानम
निवरूप शिवमुदित शिवालय तन्मेमन शिवसङ्कल्पमस्तु ।'[४]

एव च पर्यालोचनेनोत्पत्ति स्थिति प्रलयकारी नित्यनिरजन शुद्धबुद्धो निष्कल जगदधिकारी सर्वाधार शिव । तत्प्रवर्तिधातवश्च शीडवृक्ष, शिव।"

## २ प्रमुख नाम्नामर्था

अथदानी स्तोत्रागतप्रमुखनाम्नामर्था अभिविच्यन्त तत्रादौ रुद्रस्य विशेषतो विवादास्पदस्य । रोदयति सवम तमाल[५] इतिरुद्र सहर्ता देव रुदिर अश्रु विमोचने ण्यन्तात् रोदेर्णिलुकचेति णलोपे[६] रकिप्रत्यय च सिद्धयति । अन्यत्रापि सायण एतदाशयक वक्ति। तथा च अथववेदे रुद्रलायभेषज इति मन्त्रव्याख्यायां रौतिरुदायते तारक ब्रह्मोपदिशतीति रुद्र ।[७]

'जन्तो प्राणेपूत्क्रममाणेषु रुद्रस्तारक ब्रह्माव्याचष्टे[८] । शब्दब्रह्म तन्नाम्ना रोद्यमाणो द्रवति सवप्राणि हृदय वतत इति वा। ब्रह्मेणछिन्नशिरस, शोषतप्रजापति अनुस्वयमपि शोकवशात अरोदीदिति वा उत्पत्ति काले स्वय अरुददितिवा रोदर्यातसवमन्तकाले इति वारुद्र ।[९]

यास्काप्याह रुद्रो रौतीति सतो रोद्यमाणे द्रवतीति वारोदयतेर्वारुद्र ।

१ महाभारते १६१।१०
२ अभियक्तोक्ति
३ ऋग्वेदे १०।१२६।२
४ ऋकपरिशिष्ट ३३।१२
५ अथववेदे १।१६।३ मन्त्रस्य सायणभाष्ये
६ उणादिसूत्रम् २।२२
७ अथववेदे २।२७।६
८ जाबालोपनिषदि १
९ अथववेदे सायण १।१६।३

यन्रुदत्तद्रुद्रस्य रुद्रत्वमितिकाठकम।यदरोदीत्तदद्रुस्यरुद्रत्व इति हारिद्राविकम ।[1] यदरुन्त्तदद्रुस्य रुद्रत्वमिति काठकाना प्रवचनम् ।[2] यदरोदीत्तदद्रस्य रुद्रत्वमिति हारिद्राविकाणाम ।[3] अयत्रापि नमो रुद्राय नमोस्तु तक्मने [4] इति व्याख्याया सायणोरुद्राय रोदयति उपतापेनाश्रूणि विमोचयतीति रुद्र । वृहद देवताया च 'यतोऽन्तरिक्षेविद्युत् वप्टि दहत नरान अरोदीत अतोऽस्य रुद्रत्वम् । तथा च तत्रव—

'अरोदीदन्तरिन्येयत् विद्युदवप्टिदद नृणाम ।
चतुर्भि ऋपिभिस्तन रुद्र इत्यभिसस्तुत ॥१॥"[5]

बहदारण्यकोपनिपदि—यताऽस्मात शरीरात उ क्रामन्ति रोदयन्ति अथ यद्रोदयन्ति तस्माद्रुद्रा इति तया च—

कतमे रुद्रा इति दशेमे पुरुपे प्राणा आत्मकादशाते ।
यदास्माच्छरीरमर्त्यादुत्क्रामयन्त्यथारोदयन्ति तस्माद्रुद्रा ॥१॥"[6]

रुद्रोऽग्निरिति अथववेदे—तया च—

"तस्म रुद्राय नमो अस्त्वग्नये [7] इति शतपथेऽप्याह "अग्निर्वै रुद्र'[8] इति ।

हलायुधकोशे च रुद्रशब्दार्थे पूर्वोक्तरीत्या विग्रह कृत्वा शिव महादेव भाद्यर्था लिखितास्तथा च—

'रोदयति रुन्+णिच्' रोदेर्णिलुक् चेति, रक्िणेशच लुकि शिवोमहादेव शकर उमापति ।[9]

महाभारते च 'त्रिजूटश्चीरवासाश्चरुद्र सेना पतिर्विभु ।"[10]

कुमारसम्भवे च—' रुद्राणामतिमूर्धानि क्षतहुकार-शसिन [11]

वैदिकसाहित्ये रुद्रशब्दस्य व्युत्पत्तिविभिन्नरूपेणावलोक्यत । तत्रसायण महीधरोवटादिव्याख्याकाराणामुदधारणानिनीयन्त ।

सायण —

१ निरुक्त दवत काण्ड १०।१।१६ पृ० ७१४
२ अथववे‍े २५।१
३ तु० स० १।५।१।१
४ अथर्ववेदे ६।२०।२
५. वृद्देवतायाम् २।३४
६ अष्टाविंशत्युपनिषदि १९६५ काशी बृहदारण्यकोपनिषदि ३।९।४
७ अथर्ववेदे ७।८।३
८ शतपथे ३।१।३
९ हलायुधकोशे १८७६, पृ० ६८
१० महाभारते २३।१७।४६
११ कुमारसम्भवे २।२६

१ रुद्रस्य कालात्मकपरमेश्वरस्य।'[१]
२ "रुद्राय क्रूराय अग्नये।"[२]
३ "रुत दुःख तद हेतुभूत पाप वा तस्य द्रावयितारौ रुद्रौ संग्रामे भयंकर शब्दयन्तौ।'[३]
४ "रुद्राणां प्राणरूपेण वर्तमानानां मरुतां यद्वा रोदयितणां प्राणानां। प्राणाहि शरीरान्निर्गता सन्तोबन्धुजनानरोदयन्ति।"[४]
५ रुद्राणां रोदन कारिणा' घाटीरूपोययास्तौरुद्रवर्तनौ।
६ 'रोदयन्ति शत्रूनिति रुद्रा।[६]
७ 'रुद्रौ संग्रामे रुदन्तौ।[७]
८ 'हे रुद्रज्वरादिरोगस्य प्रेषणन सहतर्देव।[८]
९ "रुद्रिय सुखम्।[९]
१० रुद्रिय रुद्रसम्बन्धिभेषजमिति।[१०]

अथर्ववेदे—

१ रोदयति सर्वमन्तकाले इति रुद्र महतां देव।[११]
२ रोतिशब्दायते तारकं ब्रह्म उपदिशतीतिरुद्र।[१२] तथा च जाबालश्रुति 'अत्र हि जन्तो प्राणोपूत्क्रामत्सुरुद्रस्तारकं ब्रह्मव्याचष्टे।'[१३]
३ 'तस्मजगत्सृष्टे सर्व जगदनुप्रविष्टाय रुद्राय।[१४]
४ "रुत् दुःखं दुःखहेतुर्वा तस्यद्रावको देव रुद्र परमेश्वर।'[१४]
५ 'सर्वप्राणिनो मामनिष्टवाक्निदयन्ति इति स्वयं रौतिरुद्र।[१५]
६ 'स्वसेवकानादु खस्यद्रावकस्वरुद्रस्य।[१६]
७ "महानुभाव रुद्रम्।'[१७]
८ 'रुद्रस्य हिंसकस्य देवस्य।'[१८]
९ "रुद्रस्य ज्वराभिमानिोदेवस्य।"[१९]
१० रुद्र रोदयितोमूलाभिमानिदेव।[२०]

---

१ ऋग्वेद ६।२८।२
२ ऋग्वेद १।२७।१०
३ तत्रैव १।११८।१
४ तत्रैव १।१०१।७
५-७ तत्रैव १।३।१ तथा ३।३२।२ तथा ८।२६।१
८-१० ऋग्वेद १।११६।१ तथा २।११।१ तथा १।४३।३
११ अथर्ववेद १।१९।३
१२-१३ जाबालोपनिषदि १ अथर्ववेद २। ७।६
१४-१७ अथर्ववेद ७।६।२।१ ११।२।३ १८।१।४० १८।१।४०, १८।१।४०
१८-२० तत्रैव ६।५९।३, ४।२१।७, ६।९०।१

११ "रोदयति उपतापेनाश्रूणि मोचयतीति रुद्रोज्वराभिमानिदेव ।"[1]

१२ 'रोदयिताशत्रूनितिरुद्र'[2]

१३ "रुद्रा रोदका ।"[3]

१४ "रुद्रा रोदयितार अन्तरिक्षस्यानीया देवा ।"[4]

१५ 'रुद्र पशूनामभियन्तापीडाकरोदेव ।'[5]

उवटाचार्यस्य भाष्यम्—

१ 'रुद्र स्तोतभि ।"[6]

२ "रुद्रवतनी रुणवतनी ।"[7]

३ "रुद्रो शत्रूणा रोदयितारौ ।'[8]

४ "रुद्र घोर ।'[9]

महीधराचाय —

१ "रुद्रस्य शिवस्य ।"[10]

२ 'रुद्राय शकराय ।"[11]

३ "रुत् दुःख द्रावयतीतिरुद्र रवणरुत ज्ञान राति ददाति नन् दुखमोगनरोदयति ।[12]

४ "रुद्रस्य क्रूरदेवस्य ।"[13]

५ 'रुत दुख द्रावयति नाशयति ।[14]

६ 'रुद्रो दुःखनाशक ।[15]

७ "रोदयति विरोधिना गतम् ।'[16]

---

१ अथर्ववेदे ६।२०।२
२ तत्रैव ७।६२।१
३ तत्रैव ५।६।६।१०
४ तत्रैव १६।११।४०
५ अथर्ववेदे ६।१४।१
६ यजुर्वेदभाष्ये ३८।१६
७ तत्रैव १६।८२
८ तत्रैव २०।८१
९ तत्रैव ११।५५
१० वा० यजुर्वेदे १६।५०
११ तत्रैव १६।४८
१२ तत्रैव १६।१
१३ तत्रैव ११।१५
१४ तत्रैव १६।२८
१५ तत्रैव १६।३६
१६ तत्रैव ३।५७

माना गवाद्य पशव यथा तत्स्वामिनइव सवज्ञ इश पशुपति ।"[1]

शिवपुराण पशु पाश शब्दार्थ अज्ञानप्रभवदु ख जडचेतनक्षर रूपण वर्णितस्तत्रापि अयमेवार्थ समायाति । तथा च—

पशुपाश-पति ज्ञान यल्लब्धव्य तु मयापुरा ।
तन्निष्ठा परा कार्या पुरुषण सुखार्थिना ॥१॥
अज्ञानप्रभव दु ख ज्ञानेनव निवतत ।
ज्ञानेवस्तु परिच्छेदो वस्तु च द्विविध स्मृतम् ॥२॥
अजड च जड चव नियन्त च तयोरपि ।
पशु पाश पतिश्चेति कथ्यत तत्त्रय समास ॥३॥
अक्षर च क्षर चव क्षराक्षरपद तथा ।
तदेतित्रतय भूम्ना कथ्यत तत्त्ववेदिभि ॥१॥
अक्षर पशुरित्युक्त क्षर पाश उदाहृत ।
क्षराक्षरपर यत्तत्पतिरित्यभिधीयत ॥२॥
प्रकृति क्षरमित्युक्त पुरुषोऽक्षर उच्यते ।
ताविमौ प्रेरयत्यन्य स पर परमेश्वर ॥३॥
अस्ति कश्चित्परपत रमणीय गुणाश्रय ।
पतिर्विश्वस्य निर्माता पशुपाश विमोचन ॥४॥
अभाव तस्यविश्वस्य सृष्टिरपा कथ भवत ।
अचनत्वादज्ञानादनया पशुपाशया ॥५॥[3]

एव पशुशब्देनाज्ञानिनोजीवा तत्पतिश्च परमेश्वरो रुद्र इत्यथ ।

विश्वेश्वरो विश्वम्भरश्च—

योविश्वमीष्ट स विश्वेश्वर । विश्वस्य जगत ईश्वरोवा । यश्च विश्व बिभर्ति स विश्वम्भर । यद्वा याविश्वम बिभर्ति धरति पुष्णाति वास विश्वम्भर जगदीश्वरस्तथा च मन्त्र्युपनिषदि—

विश्वेश्वर नमस्तुभ्य विश्वात्मा विश्वक्रीडारति प्रभु । [4]

अथववेदे—

विश्वम्भर विश्वेनमाभरसा पाहिस्वाहा ।

शकर —

शम्पूर्वकडुकृञ धातोरचि प्रत्यये निष्पाद्यतेऽय श कल्याण करोति स

१ अष्टाविंशत्युपनिषदि प ६६
२ शिवपुराणवायवीय संहितायाम् पण्डित पुस्तकालय काशी ७।२।१० १२
३ शिवपुराणवायवीयसंहितायाम् ७।२।१३ १६ तथा ७।६।२ ३
४ मत्र्युपनिषदि ५।१४
५ अथववेदे २।१६।५

शङ्कर ।"[१]

शङ्कानां समूहः शङ्कम् तस्य प्रदाहकः सर्वसंशयप्रदाहक इत्यर्थः ।

महादेव —

(क) महांश्चासौ देवः । देवेषु महानित्यर्थः ।
(ख) महतादेवः ब्रह्मादिदेवानां देवः ।
(ग) सर्वान्भावान् परित्यज्य आत्मज्ञानयोगैश्वर्ये महति महीयते तस्मादुच्यते महादेवः ।"[२]
(घ) ब्रह्मैव रङ्गनाथः तं क्रीडनकं कन्दुकादिभिरेव क्रीडतीति महादेवः ।
(ङ) महद्भिर्मर्दीयतीति महादेवः ।
(छ) देवानां समूहानां च यच्चास्य विषयो महान् ।
यच्चविश्वं महद् रक्ति, महादेवस्ततः स्मृतः ॥१॥"[३]
(ज) 'सर्वादेवानपीशश्च, समेतानसुरैः सह ।
अभ्यति तेजसादेवः महादेवस्ततः स्मृतः ॥१॥'[४]
(झ) चिज्जडानां तु योद्रष्टा सोऽच्युतो ज्ञानविग्रहः ।
स एवहि महादेवः स एव हि महाहरिः ॥१॥'[५]

बृहदारण्यके च—

'नान्यतोऽस्ति द्रष्टा ।"

श्वेताश्वतरोपनिषदि 'साक्षी चेता केवलो निर्गुणश्च ।'[६]

एवञ्चास्यान्यदेवापेक्षया महत्त्वं तच्चात्र विभिन्नविरुद्ध धर्माणां समन्वय अग्निवत्पेऽपि शिवता श्मशानावस्थायामपि प्रसाददातृता । सुखदुःख-द्वन्द्वादिहीनत्वम् । विरुद्ध धर्माणामेकमात्राश्रयत्वम् । (सर्पमयूर-वृषभसिंह गंगा-पार्वती मूषकादीनाम्) शुद्ध-बुद्धनिरंजनत्वम् ॥

भव —

भवतीति भवः तथा चाथर्ववेदे सायणः —
'भवति उत्पद्यतेऽस्मात्सर्वं जगत् ॥"[७]

---

१ सत्यार्थप्रकाशे पृ० स० १२।
२ विष्णु सहस्रनाम शङ्करभाष्ये ६५ श्लोके गीता प्रेस गोरखपुर
३ महाभारते अनुशासन पृ० १६१।८
४ वायुपुराणे १०।६
५ बृहदारण्यकोपनिषदि ३।७।२३
६ श्वेताश्वतरोपनिषदि ६।११
७ अथर्ववेदे ४।२८।१

शव —शणातीति शव तथा च विष्णु-सहस्र-नाम्नाम शाकरभाष्ये—
शणाति सहार-समय सहरति सहारयति सकला प्रजा इति।"[1]
सव —यतोऽय असत सतश्च प्रभवोऽव्ययश्चात सव तथा च—
असतश्च सतश्चव सवप्रभवाप्ययात।
सवस्य सवदाज्ञानात, सवमन प्रचक्षत ॥१॥[2]

एवमभि प्रमुख-नामभिरपि विशेष रूपेण स्तोत्रा गतभगवान शिव सवश परात्परा निष्कल सृष्टिपालनप्रलयहतु योगीश्वर गुणानामाधार सर्वाधार निराधार सच्चिदान द इति।

३ माहात्म्यम

महिम्न पार ते परम विदुषो यद्यसदृशी।
स्तुतिब्रह्मादीनामपि तदवसन्नास्त्वयिगिर ।
अथावाच्य सव स्वमतिपरिणामावधिगणन।
ममाप्येष स्तोत्रे हर निरपवाद परिकर ॥

भगवत शिवस्य महिमान प्रतिपादयितु गन्धवराजोऽप्यसमथ आसीत माहात्म्यविषय इद कथन नासत्यपदवीमवगाहते। जगति यत्किचिदपि भवति तत्सव तदिच्छयव भवति। तथा च श्रीमदभागवत—

'ब्रह्मादयो यत्कृत-सेतुपाला यत्कारण विश्वमिद च माया।
आज्ञाकरी तस्य पिशाच चर्या, अहोविभूम्नश्चरित विडम्बनम ॥'[3]

देवाना प्रथमोऽय जनानशुभकमणा सयुनक्ति। विश्वाधिपोमहर्षिश्च तथा महानारायणोपनिषदि—

यो देवाना प्रथम पुरस्तात विश्वाधियोरुद्रोमहर्षि।
हिरण्य गभपश्यत जायमान, सनोदेव शुभयास्मृत्यासयुनक्तु ॥[4]

तत्र तत्र स्तोत्रे विग्रक्षणस्य रक्षाथमभ्यथना दश्यत। तथा च शिव कवचे—

कुठारवेदाङ्कुशपाशशूलकपाल ढक्काक्षगुणान्दधान।
चतुमुख नीलमुखस्त्रिनेत्र पायादघोरो दिशिदक्षिणस्याम ॥[5]

अग्निपुराणेशिव रात्रिव्रतप्रसगे नरकाणवतारक प्राणादिदायकश्च कथित

---

१ विष्णु सहस्रनाम शकर भाष्य १७ श्लोके
२ महाभारते उ पव ७०।११
३ श्रीमदभागवतमहापुराण (मूलमात्रम) २ १६ गीता प्रस गोरखपुर ८।१४।२८
४ महानारायणोपनिषदि (विमलानन्द मद्रास) प १६१
५ शिवकवचस्तोत्र १२

स्तथा च—

माघफाल्गुनयोर्मध्ये कृष्णा यातु चतुर्दशी ।
कामयुक्ता तु सोपोष्या कुर्वञ्जागरणं व्रती ॥१॥
शिवरात्र्याम्यहं शम्भुं भुक्तिं मुक्तिप्रदायकम् ।
नरकार्णवोत्तारनाव शिवनमोऽस्तु ते ॥२॥[1]

भगवानशिव सर्वशक्त्यैकनिदानभूतोऽस्तत्तदाराधनयासर्वसम्प्राप्ति तथा च ब्रह्म पुराणे—

सर्वशत्रुदमन निधान सर्वसम्पदाम् ।
स तु कर्ता महादेव संहर्ता सर्वमहेश्वर ॥१॥[2]

ब्रह्मवैवर्ते भगवान्विष्णु सुरानुपदिदेश य महेश्वरस्य प्रिय नान्योऽस्ति ये च महेश्वर न भजन्ते ते कालसूत्रनरके पच्यन्ते । सकृदपि शिवाराधनया नर आकल्पात् ज्ञानी मुक्तश्च भवति । तथा च—

मत्सेवां कुरु सर्वेश सर्व सर्वाविशावर ।
अद्यप्रभृतिनामेन तेजसा वयसा शिव ॥१॥
त्वत्परो नास्ति मे प्रेयांस्त्वं मदीयात्मन पर ।
ये त्वां निन्दन्ति, पापिष्ठा ज्ञानहीना विचेतस ॥२॥
पच्यन्ते कालसूत्रेण, यावच्चन्द्रदिवाकरौ ।
कृत्वा लिंग सकृत्पूज्य वसेत्कल्पायुत दिवि ॥३॥
ज्ञानवान् मुक्तवान् साधु शिवलिंगार्चनाद भवेत् ।
शिवलिंगार्चनादन्यत् न तीर्थं तीर्थमत्र तत् ॥४॥[3]

लिंग च शिव भक्ति श्रेष्ठ्यमाह—

अन्यभक्तसहस्रेभ्यो विष्णुभक्तो विशिष्यते ।
विष्णुभक्तसहस्रेभ्यो रुद्रभक्तो विशिष्यते ॥१॥
रुद्रभक्तात्परतरो, नास्ति लोके न संशय ।
सर्वावस्थां गतो वापि युक्तोऽपि सर्वपातकै ॥२॥
शिवध्यानान्नमेद्देहं यथा रुद्रस्तथा स्वयम् ।
हत्वा भीत्वा च भूतानि भुक्त्वा चान्यतोऽपि वा ॥३॥
शिवमेकं सकृत्स्मृत्वा सर्वपाप प्रमुच्यते ।[4]

सौरपुराणेऽपि लिंगार्चनादधिक पुण्यं न किंचिद्भुवनत्रये उक्तम् सर्व तीर्थाना यानि पुण्यानि च शिवलिंगार्चनसाम्य नार्हन्ति ।

---

१ अग्निपुराणे १९३।१ ३ ३ मनसुखराय मोर ५ क्लाइव रोड कलकत्ता २०१४
२ ब्रह्मपुराणे १२२।१०
३ ब्रह्मवैवर्ते १।६।२६ २९ २ ४६
४ लिंगपुराण २।४।२० २१ तथा २४ अध्याये ३४, ३८

अग्निपुराणेऽपि लिंगार्चनस्य भुक्ति मुक्ति दायकत्वमुक्तम् । तथा च—

यदा नम शिवायेति, एतावत्परम पदम् ।
अनेन पूजयल्लिंग शिवं यस्मिन्निरचित शिव ॥१॥
लिंगार्चनाद्भुक्तिमुक्ती, यावज्जीवमतोऽर्चयेत् ।
वरप्राणपरित्यागो भुञ्जीतापूज्य नव तम् ॥२॥
सर्वयज्ञतपोदानतीर्थवेदेषु यत्फलम् ।
तत्फल कोटि गुणितं स्थाप्यलिंग लभेन्नर ॥३॥
त्रिसन्ध्य योऽर्चयेल्लिंग कृत्वाबिल्वेनपत्रितम् ।
शतकान्यिक यावत् कुलमुद्धृत्य नाकमाप ॥४॥[1]

गरुडपुराणेऽपि शान्त्यर्थ रुद्रस्य पूजोक्तास्त्रसप्तमाध्याये द्रष्टव्य नील मतपुराणेऽपि भगवान् शिव सर्वज्ञ सर्वद्रष्टा चेति प्रतिपाद्यान्यत्वच्छया जगदिद विवर्तीति । तथा चोक्तम्—

एष सर्वेश्वर धात्र एष कारण-कारणम् ।
एष चाचिन्त्यमहिम एष ब्रह्म सनातन ॥१॥
स एष सर्व कर्ता च सर्वज्ञश्च महेश्वर ।
यदिच्छया जगन्दि वर्तते सचराचरम् ॥२॥[2]

ब्रह्मपुराणे रामेश्वर-तीर्थ प्रसंगेऽस्य सर्व-काम फलप्रद उक्त । तथा च तत्रैव—

आस्ते यत्र महादेव तीरे नदनदी-पते ।
रामेश्वर इतिख्यात, सर्वकामफलप्रद ॥१॥
राजसूय फल सम्यक् वाजिमेघफल तथा ।
प्राप्नुवन्ति महात्मान संसिद्धिपरमा तथा ॥२॥
शाक्तर योगमास्थाय ततोमोक्ष व्रजन्ति ते ।
आत्मतीर्थमिदख्यात भुक्तिमुक्ति प्रदनृणाम् ॥३॥
तस्य प्रभाव वक्ष्यामि, यत्र ज्ञानेश्वर शिव ।
नास्ति लिंगार्चनात्पुण्यमधिक भुवन त्रय ॥४॥[3]

अन्यत्र च—

नास्ति लिंगार्चनात् पुण्य अधिक भुवनत्रये ।
लिंगेऽर्चितेऽखिल विश्वमर्चित स्यान्न सशय ॥१॥
मायया मोहितात्मानो न जानन्ति महेश्वरम् ।
पृथिव्या यानि तीर्थानि, पुण्यान्यायतनानि च ॥२॥

---

१ अग्निपुराण ३२०।१ १२ १४ १५ मनसुखराय मोर क्लाइव रोड, कलकत्ता
२ नीलमतपुराण ४।१३, ४४ ४५
३ ब्रह्मपुराण २८।४६ ४६ ६८ तथा ११६।१

शिव निर्गे वसन्त्येव तानि सर्वाणि नारद।
शिवभक्ता वर्जयित्वा सर्वेषां शासको यम ॥३॥[1]

भगवन्त शिवमेव ज्ञात्वा नरामृत्यु तरति नान्यथा। तथा च श्वेताश्वतरोपनिषदि—

वेदाहमेतम्पुरुष महान्तमादित्यवर्णतमस परस्तात्।
तमेव विदित्वाऽतिमृत्युमेति नान्य पन्था विद्यतेऽयनाय ॥१॥[2]

भगवान शिवोऽशिववेषेणापि शिव। तस्य वैषम्यपूर्ण वेष दृष्ट्वा जना विस्मयमधिगच्छन्ति। स्वयमकिञ्चनोऽपि सम्पदा प्रभव श्मशानवास्यपि त्रिलोकनाथ। भीमोऽपि शिव इतिकथ्यत तथा च कुमार-सम्भवे—

अकिञ्चन सन्प्रभव स सम्पन्न, त्रिलोकनाथ पितसद्मगोचर।
समीमरूप शिव इत्युदीयत, न सन्ति याथार्थ्य विद कपालिन ॥[3]

एव च भगवान भुक्ति मुक्तिदायकोऽस्याराधनया नरीरोगशोक-मोहादि मुक्त परमामैहिकी पारलौकिकी च श्रिय विन्दति। अस्य गुणान्विमातु न कोऽपि प्रभु। तथा च महाभारते—

अशक्तोऽहगुणान्वक्तु महादेवस्य धीमत।
योहिसवगतोदेव न च सर्वत्रदृश्यते ॥१॥
नास्तिशवसमा देवो नास्ति शक्ति-समागति।[4]
एव च स्पष्टमेव सिद्ध यत शिव-समोनास्ति।

अनुष्ठान परायणा ऋग्वेदीय मृत्युजय जप कृत्वाऽस्याध्यान् रोगान अपनोदयितु विनाशितु च पारयन्ति। तत्र च मन्त्र—

त्र्यम्बक यजामहे सुगन्धि पुष्टि वर्धनम्।
उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मामृतात ॥१॥[5]

भगवान शिव एव एव जगत सगस्थिति प्रत्यवहारात्मिका क्रिया विधत्ते तथा च भागवते—

ददृशु शिवमासीनत्यक्तामर्ष मिवान्तकम्।
त्वमेव भगवन्नेतत शिवशक्त्यो स्वरूपयो।
विश्व सृजसि पास्यत्सि क्रीडन्नूर्ण-पटो यथा ॥२॥[6]

सर्गादि कार्याशयवास्यात्मकानि शिव एव त्र्यम्बकोनान्य तथा च

---

१ सौर पुराण ६४।३ ३१ ३४
२ श्वेताश्वतरोपनिषदि ३।८
३ कुमारसम्भवे ५।७७। पु० पुस्तकालय काशी १९५९ सम्पूर्ण हिन्दी टीका
४ महाभारते अनु प० १४।३ तथा ४६।११
५ ऋग्वेदे (संहिता) ७।५९।१२
६ श्रीमद्भागवतेमूलमात्र ४।६।४२ तथा ४३ गीता प्रेस गोरखपुर २०१८

कालिदास —

हरियथक पुरुषोत्तम स्मृत महेश्वरस्त्र्यम्बक एव नापर. ।
तथा विदुर्मा मुनय शत क्रतु । द्वितीय-गामी नहि शब्द एषन ॥१॥[1]

परम-कारुणिक एव दु खत्रयाभिघात समर्थ ऐहिकामुष्मिकश्रेयो वाप्तय ऽस्यार्चाश्रियत । तत्रापिविद्याप्राप्तय तु विशेषण, महर्षिणा पाणिनिनार्ऽ शिवादेवज्ञानमवाप्तम् । सनकादयस्च योगज्ञानमवापु । तथा च—

नृत्यावसाने नटराज राजो ननाद ढक्का नव पचवारम ।
उद्धर्तु-काम सनकादि सिद्धानेतद्विमर्शे शिवसूत्रजालम् ॥१॥[2]

भागवते चास्य विद्या प्रदत्वमुक्तम् । तथा च—

'देवीं मायां श्रीकाम तजस्कामा विभावसुम् ।
वसुकामो वसू रुद्रान वीर्य-कामोऽथवीर्यवान् ॥१॥
यज्ञ यजेद्यशस्काम कोश राम प्रचेतसम ।
विद्या-कामस्तु गिरीश दाम्पत्याय उमा सतीम ॥२॥[3]

महानारायणे— ईशान सर्वविद्यानामीश्वर सर्वभूतानामिति ।"[4]

४ वैदिक-स्वरूपम्

निरुक्ते प्रथातो मध्यस्थानादेवता इति प्रकारणे रुद्रो मध्य स्थानीय देवत्वेन निर्दिष्ट ।[5] तत्र नाम्नो निर्वचने स रुद्र प्रजापति स्वपितर वाण विद्धमनुशोचनप्ररदीदिति तस्य रुद्रत्वम । तथा च—

'सविल स्वपितर प्रजापतिमिषुणा विध्यन्तमशोचन प्ररुदत तद्रुद्रस्य रुद्रत्वम् । यदरोदीत्तस्य रुद्रत्वम् । [6]

श्वेताश्वतरोपनिषदि रुद्र एक एव जगत्सृजति पाति च तथा च तत्रव—

एकोहिरुद्रो नद्वितीयाय तस्थुय इमाल्लोकान ईशत ईशनीभि प्रत्यङ जनास्तिष्ठति सचुकोचा तकाले, ससृज्य विश्वा भुवनानि गोप्ता ।"[7]

महानारायणापनिषदि च—

यो देवाना प्रथम पुरस्तात विश्वाधिपोरुद्रोमहर्षि हिरण्यगर्भोऽपश्यत जायमान सनो देव शुभया स्मृत्या सयुनक्तु ।'[8]

---

१ रघुवंशे ३।४६
२ नन्दिकेश्वर काशिकायाम १
३ श्रीमद्भागवते मूलपाठम् २।३।३ तथा ७
४ महानारायणोपनिषदि १८।१।२।३।३ तथा ७
५ निरुक्तेदेवतकाण्ड १०।१।१
६ तत्रव १ ।१।६
७ श्वेताश्वतरोपनिदि ३।२
८ महानारायणोपनिषदि १२।१२

यजुर्वेदे च रुद्रा असंख्याता उक्तास्तथा च—
असंख्याता सहस्राणि ये रुद्रा अधिभूम्याम ।[1]
एकत्ववहुत्वयो परिहारस्तु निरुक्त इत्थं क्त ।
'तासामहाभाग्यादेकैकस्या अपिबहूनिनाम धयानि भवन्ति तथा
तत्र संस्थानैकत्वम् संभोगैकत्वं चापेक्षितव्यम । [2]

एवं चात्र संख्याया भिन्नत्वेऽपि स्थानैकत्वेन रुद्र एक एव तथा च निरुक्तभाष्येऽपि—

"एक एव रुद्रोऽवतस्थे न द्वितीयो रणे निघ्नन् पृतनासु शत्रून् संसज्यविश्वा भुवनानि गोप्ता ।'

अथर्ववेदेऽपि रुद्र एक एव धातृ विधातृ-वरुणादि रूपेण कार्य करोति । तथा च—

स धाता स विधाता स वायुर्नभ उच्छ्रितम सोयमा स वरुण सरुद्र स महादेव । तमिदं निगतं सह स एष एक एव एकवृदेक एव ए तस्मिन्देवा एक वृतोभवन्ति ।[4]

एक एव रुद्र सर्वव्यापकस्तथा च तत्रैव यो अग्नौ रुद्रोयोऽप्सु योऽप्स्वन्तय ओषधीर्वीरुध आविवेश य इमा विश्वाभुवनानि चक्लृपेतस्मैरुद्राय नमोऽस्त्व ग्नये । [5]

अनेन मन्त्रेण रुद्रस्य सर्वव्यापकत्व सिद्ध्यति । अत्र रुद्रस्यक वचनान्ते नव निदेशैस्तथा च तत्रैव—

तव चतस्र प्रदिशस्तव द्यौस्तव पृथिवी तववेदमुवन्तरिक्षम । तवेद सर्वमात्मन्वद यत्प्राणत पृथिवीमनु ।[6]

महानारायणोपनिषदि च—सर्वत सर्व रूपेण रुद्रस्तिष्ठति ।

सर्वत सर्व शर्व सर्वेभ्य नमस्ते अस्तु रुद्ररूपम्य ।
रुद्राय नम कालाय नम कालविकरणाय नम इति ॥१॥
सर्वो वैरुद्रस्तस्मै रुद्राय नमो नम पुरुषो वै रुद्र ।
सन्महा नमो नम विश्वभूत भुवन चित्रबहुधा जात
जायमान च यत् । सर्वोह्येष रुद्राय नमोऽस्तु ।[7]

---

१ यजुर्वेदे १६।५४
२ यजर्वेदे, दवतकाण्डे ७।२।५
३ तत्रैव १।१४
४ अथर्ववेदे १३।४।१।३ ४ १२ तथा १३।४।२
५ तत्रैव ७।८२।१
६ अथर्ववेदे ११।२।१
७ महानारायणोपनिषदि ८।१। पृ० २०३ । तथा २०७ तथा २१५

ш च रुद्र जगत्पिता तथा चाथववदे।

भुवनस्य पितर गीर्भिराभी रुद्र दिवावधयारुद्रमामो वहन्तमृष्वमजर सुषुम्नमृधग्घुवेव कवि नपितास [१] अन्यच्च—

स्थिरेभिरङ्गेपुररूप उग्रोबभ्रु शुक्रेभि पिपिशेहिरण्यो

ईशानान्स्यविश्वस्य भूरिन वो उपोपदुदु-सूयम्।[२]

अय दढरगयुक्त प्रवलस्तजस्वी रुद्र शुद्धतेजोभि गोभते। अयमस्या सृष्टे स्वामी। अस्य शक्तिर्दिव्या भुवनस्य ईशानात रुद्रात असूय न पौषदिति' अनन्तस्य मूलरूपस्य ज्ञान भवति। भुवनस्य पितारुद्र भुवनस्येशान रुद्र।'[३] महानारायणोपनिषदि—

कद्रुद्राय प्रचेतस मीढुसष्टमायत व्यसवोचश्ननातम् हृदे सर्वो ह्येषरुद्रस्त स्मग्द्राय नमोऽस्तु।[४]

प्रचतस प्रकष्टभानाय मीढुष्टमाय लोक जनवाय तव्यसे बन्दु नक्तियुक्तया

मामात्मकमिद जगत्प्रकृति महदवरश्चतदध्यक्ष तदवयवभूतरिद जगत व्याप्तम। तथा चापनिषदि।

मायां तु प्रकृति विद्यात मायिन तु महेश्वरम।
तस्यावयव सभून व्याप्त सवमिद जगत॥[५]

जगत्पिता चायमव—

तमीश्वराणा परम महेश्वर तदेवताना परम च दवतम्।
पति पतीना परम परस्तात विदाम देव भुवनेशमीडयम॥[६]

अग्निरपिरुद्रस्तथा चक सहिताया अग्निरेव रुद्र'[७] जगत पितृत्व चास्य

भुवनस्यपितर गीर्भिराभिरुद्र दिवावधया द्रमवतो वहन्त ऋष्वमजर सुषुम्नम्हृमुव शुवेमकविनेपितास॥[८]

अनेकरुद्रेषु व्यापको रुद्र एक एव—तथा च—

(क) रुद्र रुद्रषु रुद्रिय हवामहे।'[९]

(ख) 'शाना रुद्रो रुद्रेभिजलाषि।[१०]

१ ऋग्वेदे ६।४६।१०
२ तत्रव २।०३।६
३ तत्रव ६।४६।१
४ महानारायणोपनिषदि २५।१४ २१७ ऋग्वेदेवाय १।४३।१
५ श्वेताश्वतरोपनिषदि ४।१०
६ तत्रव ६।७
७ ऋक्सहितायाम् १।२७।१०
८ तत्रव ६।४६।१०
९ तत्रव १।६४।८
१० तत्रव ७।३५।६

(ग) "शनो रुद्रमि देवो मृडयातिन ॥[१]

(घ) रुद्रेमिराहवावहन्तम ॥'[२]

अनेकलघुहन्नानेकोमहान रुद्र प्रेरयति । सनातन स्थानपु चेतयते । यत्र विनानिन स्वमनासि विशिष्ट रूपेणधारयन्ति । तथा चक्संहितायाम—

तदरुद्रस्य चेतसि यह् व पत्नेषु धामसु ।
मनोयत्र वितद्दर्घुविचेतस ।[३]

भगवत शिवस्यव निश्वसिता वेदास्तथा च तत्रव सायण —

यस्य निश्श्वसित वेदा यो वेदेभ्योऽखिल जगत ।
निमम तमह वन्द, विद्यातीथ महेश्वरम ॥१॥[४]

जाबाल्युपनिपदि रुद्र पशुपतिरवनाख्यात । तत्र ससारी जीव पशुस्तत्पतिश्च शिव —पशुपति-शब्दार्थ कथित ।

पशुपतिरहकाराविष्टो ससारीजीव
ईश पशुपति कथ्यत ।[४]

शुक्ल यजुर्वेदे चाय हरित धनुर्विभर्ति सत च पिनाकम तथा च—

धनुर्विभर्ति हरित सहस्रघ्न शतवधम शिखण्डिनम् पिनाकोऽस्य धनु ।[६]

यावदादित्यस्तपति यावदस्त गच्छति तावता चतुर्दिक्षु अस्य राज्यम । तथा च छान्दोग्य—

'स यावदादित्य पुरस्तादु देतापश्चादस्तमता द्विस्तावददक्षिणव उदेतोत्तरतोऽस्तमेता रुद्राणामेतावदाधिपत्य स्वाराज्य पर्येतेति ।'[७]

शतपथे चास्य नामतु शव भवादय शब्दा उदीरिता ।
अग्निर्व स देव तस्य-तानि नामानि शव इति ।
यथा प्राच्याआचक्षत भव इति वाहीका पशूनापती—
रुद्राग्निरिति तान्यस्य शान्तान्यचतराणि नामानीति ।[८]

कवल्योपनिषदयमुमासहाय त्रिलोचना नीलकण्ठ चिदानन्दरूपो विभु श्चोक्त ।

---

१ तत्रव १ ।६६।३
२ तत्रव ७।१०।४
३ ऋग्वेदे ६।६६।३
४ तत्रव प्रथम मन्त्रे सायण
५ अष्टाविंशत्युपनिषदि श्री द्वारिकादास शास्त्री १९६९ पृ ३६५
६ शुक्ल यजुर्वेदे १।२।१२ तथा १६।२१
७ अष्टाविंशत्युपनिषदि प० ६४ छा दोग्ये ३।७।४
८ शतपथे १।६।३८

अचिन्त्यमव्यक्तमनन्तरूपं शिवं प्रशान्तममृतं ब्रह्मयोनि—
तमादिमध्यान्तविहीनमेकं विभुं चिदानन्दमरूपमद्भुतम् ॥१॥
उमासहायं परमेश्वरं विभुं त्रिलोचनं नीलकण्ठं प्रशान्तम्
ध्यात्वा मुनिर्गच्छति भूतयोनिं समस्तसाक्षिं तमसः परस्तात् ।[1]

इत्यं ऋक्-यजुः-सामाथर्ववेदेषु शतपथादिब्राह्मणग्रन्थेषु जाबालिकैवल्यश्वेताश्वतर-बृहदारण्यक छान्दोग्यादिषूपनिषत्सु रुद्रस्य निर्देशः । तेनानेकशातव्यविषया परिचीयन्ते ऋग्वेदे सूक्तत्रयं प्रथममण्डलस्य ११४तमं द्वितीयस्य ३३तमम् सप्तमस्य ४६ तमम् रुद्रविषयकाणि । अथर्ववेदसंहितायामन्यनामानि प्रायः पञ्चाशद्वारम् । यजुर्वेदस्यैकोऽध्यायः पूर्णस्तत्तरीयसंहितायां पाठेन, अथर्वण एकादशमम् ऋक्संहितायामयं हस्तवान् शरीरमस्य बलिष्ठं मोष्ठे रमणीयं (सुशिप्र) शिरसि जटाजूटः । कपर्दीति च कथ्यते ।[2]

इमा रुद्राय तवसे कपर्दिने क्षयद्वीराय प्रभरामहे मतीः
यथा शमसद् द्विपदे चतुष्पदे विश्वं पुष्टं ग्रामे अस्मिन्ननातुरमिति ।[3]

वर्णेन बभ्रुराकृत्या दीप्तः पुरुरूपाणि हस्तानि स्वर्णभूषणभूषितः रथी । यजुर्वेदस्य रुद्राध्यायेऽथर्ववेदस्य रुद्र-सूक्ते च वर्णनम् तत्र रुद्रस्य मुखं चक्षुः त्वगुदरादीनामुल्लेखः ।[4] अयं सहस्राक्षो शितिकण्ठो जटाजूटधारी व्युप्तकेशः हरितकेश उष्णीषी बभ्रुश्च ।

तथा च—

नमः शर्वाय च पशुपतये च नमो नीलग्रीवाय च शितिकण्ठाय च
नमः कपर्दिने च व्युप्तकेशाय च नमो नीलग्रीवाय सहस्राक्षाय च ।
नमो गिरीशाय शिपिविष्टाय च, नमो मीढुष्टमाय चेषुमते च ॥[5]

रुद्राध्यायानुसारमयं बलवान् याद्धायवणोऽस्य धनुः सहस्रघ्नम् शतशरसमन्वितम् । तथा च—

धनुर्बिभर्ति हरितं हिरण्मयं सहस्रघ्नि शतवधं शिखण्डिनम् ।[6]

इषुधिं बिभर्ति हस्ते असिं निषङ्गं च धारयति । अस्य वक्षः शुक्रं शरीरस्य रक्षाय साधनान्यनेकानि सन्ति शिरस्त्राणं च धारयति तथा च—

तस्कराणां पतये नमो नमः सृकाविभ्यो जिघांसद्भ्यो मुष्णतां पतये नमः ।
नमोऽसिमद्भ्यो नक्तंचरद्भ्यो विकृन्तानां पतये नमो नमः ॥

---

१ अष्टाविंशत्युपनिषदि ४६६ पृष्ठ कैवल्योपनिषदि ६।१।६ ७
२ ऋग्वेदे २।३३।३
३ तत्रैव १।११४।१
४ अथर्ववेदे ११।२।५ ६
५ यजुर्वेदे शतरुद्रीये १६।२८ तथा तत्रैव १८ तथा २२
६ तत्रैव १६।५१ अथर्ववेद १।२।१२

नमो विल्विने च कवचिन च नमोवर्मिण च वरुथिनेनम ।
श्रुताय च श्रुत सेनाय च नमो दुदुमाय चाहनयाय च ।
विजय धनुकर्पादिन विशल्योवाणवान उन ।
अन्ने शनस्य या इषव, आमुरस्य निषगधि ॥[1]

ऋकसहितायामपि वलवान नूरश्चायमक्षोवराह
न्विोवराहमरूप वर्पान्नित्वपरूप नमसानिह्वयामहे ।
हस्तेविभ्रदभेषजावार्याणि न्नमवमर्छादिरस्मभ्यमयतम ॥[2]

अयवपमस्तम्ण शूराणामधिपति स्वसामयर्येन पवतपु रुद्वा नदी प्रवाहयति शत्रून शर च्छिन्नत्ति । अयमुप कारी । अतएव निवपदेनाभिधीयते । मन्ता पिना तथा च —

इद पित्रे मरतामुच्यत वच स्वाद्यो स्वादीयो रुद्राय वधनम—
रास्वाचनो अमृतमतमोजनत्मने तोकायतनयाय मृड ।[3]

रुद्राध्याय मवशव-पशुपति मीमोग्र शम्ना प्रयोगाऽस्म जात विश्वस्मि न्नास्ति तत्स्थान यत्राय नास्ति । समग्रपन्नर्योनास्वामी पशुपतेरयस्तु प्रागेव लिखित ।

मवाशर्वोमृत मामियात भूतपतीपशुपती नमो वाम ।
प्रतिहितामायता माविलष्ट मा नोहिंसिप्ट द्विपदो मा चतुष्पद [4]
योऽग्नीरुद्रोऽय अप्स्वत य ओषधीर्वीरुध आविवेन ।
य इमा विश्वा भुवनानि चाक्लृपतस्मैरुद्राय नमो अस्त्वग्नय ॥[5]

ब्राह्मणकालेऽस्य महत्त्वमधिकमवधत । एतस्यब्राह्मण प्रजापते दुहितु सहगमनप्रसग रुद्रात्पशो एषन्वो मवत । [6] इतिवाक्य सम्माननीय शब्द प्रयागाऽमवत् ।

उपनिपत्सुछान्दोग्य ३।७।४ वृहदारण्यके ३।६।८ मत्रया ६।५ महानारायणोपनिपदि अनेकधानसिहतापि या १।२ श्वेताश्वतरोपनिपदि ३।२।४ प्रकरणे ऽस्य वमवावर्णित ।

पाश्चात्य वेदानुशालिन वीय-चक्रस्थोदर प्रमतया मनीषिण रुद्र मृतात्म प्रधानव्यक्तित्वन स्वीकुर्वन्ति । परत्वत्र कल्पनाया एक विनियोजणोपयोग ।

वस्तुनस्तु रुद्रोऽग्ने प्रतीक । अग्निरुध्व शिखाज्ज एव रुद्रस्योध्व लिग-

---

१ यजुर्वेदे १६।२१।३६ तथा १
२ ऋग्वेदे १।११४।५
३ ऋग्वेदे १।११४।६
४ अथववेदे शक्ति सत्पान करेली १६६२, पृ० २७१, का ११।२।१
५. तत्रैव ७।८३
६ शतपथे ।१।६

तोक्ता । अग्निर्वेशाज्वलति शिवलिंगोऽपि जलधारायाम स्थाप्यते । अग्नौघृता हुतयोदीयन्ते शिवे जलधारामिवेक क्रियते तथा चऋसहिताया त्वमग्ने रुद्रो[1] ऽथववेदे च तस्मैरुद्राय नमोऽस्त्वग्नेय [2] शतपथ च—

अग्निवरुद्र [3] अग्निर्वस देव शान्ततमम ।[4]

पूव निर्दिष्टामत्र —

शुक्ल-यजुर्वेदे एकस्याएव देवताया पथक पथक नामरूपेणाग्निरशनि पशुपति भव शर्व ईशानोमहादेव उग्रा आदय शब्दा प्रयुक्ता । शतपथेऽशने रर्थे विद्युत । एव च यथवीतलेऽग्निरूपण योरुद्र स एवाकाशे मेघान्तर्द्योतमाना विद्युत । अथवसहिताया रुद्रस्य जगत लेलिहानस्य जिह्वाया वणनम् ।

अग्नि हृदयनाग्नि हृदयाग्रेण पशुपति
कृत्स्नहृदयनभव यवनाशव मतस्नाभ्यामीशान
मन्युना महादेवमन्त पशव्यनोग्र देव वनिष्ठुना
वसिष्ठहनु शिंगीनि कोश्याभ्याम ।[5]

सहस्राक्षमतिपश्य पुरस्तात रुद्रमस्यन्त बहुधाविपश्चितम जिह्वयध मानम ।[6]

तथा च रुद्रस्य पूववर्णितप्रसगतोऽस्य च मेलनेन भयानकोऽपि स भवताना त्राता मिपक्तम । रूपेण वद्य जलाय शक्तिदायी जलापभेषजश्चास्ति ।

क्व स्यतेरुद्र मृडयाकुहस्त या अस्ति भेषजो जलाय ।।[7]

अधुनापरमक प्रसगमुदधत्य समाप्यत एष प्रसग ।

परिणो हतीरुद्रस्य वज्या परित्वेषस्य दुमतिमहीगात
अवस्थिरा मघवदभ्यस्तनुष्वमीध्वस्तोकायतनयाय मृड ।।[8]

पौराणिकम (स्तोत्रप्रोक्तम)

वन्मलकत्वादाय धर्माणाम् वेदाना प्राचीनत्वात च अग्ेपु शिवस्य स्वरूप मभिधायदानी स्तोत्र-साहित्य विशेषेण सामायतश्च लौकिकसाहित्ये तत्स्वरूप निरूप्यत — लौकिकसाहित्येऽपि शिवस्य वणश्रुति मूलकमेव स्फुटीक्रियत — क्वचिद भवाऽपि —

१ ऋकसहितायाम २।१।६
२ अथर्ववेदे ७।८३
 शतपथे ।१।३
४ तत्रव १।७।३।८
५. शुक्ल यजुर्वेदे सातवलेकरसम्पादित मूलमात्र १९८४। अध्याय ३९ ८
६ अथववेदे ११ २।१७
■ ऋग्वेदे २।३३।७

एषते रुद्रभाग सहस्वस्राम्बिकयातजुषस्वस्वाहा।
एषते रुद्रभाग आखुस्ते पशु ।[1]

अत्राम्बिका भगिनी रूपेण कथिता । एवमवाखुमणपत पशु । रुद्रस्य भगवत शवमवेशानमहेश्वरादीनि नामानिमन्ति । भगवत शिवस्य रूपद्वयम प्रलय काले सहार-कत रूप रुद्र शब्देनाभिधीयते। सर्गादि पर रूप च शिव शब्देन। तथा च वायु-पुराणे—

लोकधात्रीत्वियभूमि पादौ सज्जन मेविनौ ।
सर्वेषा सिद्धयोगानामधिष्ठान तवोदरम ॥१॥
मध्यऽन्तरिक्षविस्तीर्ण तारागण विभूषितम् ।
तारापथ इवाभाति, श्रीमान्हारस्तवोरसि ॥२॥
दिशोदशभुजास्तवकेयूरागद भूषिता ।
विस्तीर्णपरिणाहाश्च, नीलाम्बुद चयोपम ॥३॥[2]

इय भूमिभगवत शिवस्य पदद्वय सिद्धयोगानामाश्रय भूतमन्तरिक्षतस्य हृदय तारापथश्च हार इव दश दिशस्त (शिवस्य) दशभुजा ।

भगवान शिव परब्रह्मरूप स्वशक्त्या सर्गादिसर्वा क्रिया विधत्ते तथा च भागवत प्रजापति-कृत शिवस्तोत्रे ।

त्व ब्रह्म परम गुह्य सदसद्भावभावन ।
नाना शक्तिभिराभातस्त्वमात्मा जगदीश्वर ॥१॥
गुणमय्यास्वशक्त्यास्य सर्ग स्थित्यप्ययान्विभो ।
धत्से यदा स्वदृग्भूमन ब्रह्मा विष्णु शिवाभिधाम ॥२॥[3]

साकारनिराकारविश्व रूपेणतत्रवाग्रे शिव विषय—

यतच्छिवाख्य परमार्थ तत्त्व देवस्वय ज्योतिरवस्थितिस्ते ।[4]

अस्य महिमानवक्तुमत्रगन्तु वा ब्रह्मादयोऽप्यसमर्था ।
न ते गिरित्राखिललोकपाल विरचि वकुण्ठ-सुरेन्द्र वन्दितम् ।
ज्योति पर यत्र रज स्तमश्च, सत्त्व न यद्ब्रह्मनिरस्तभेदम् ॥१॥[5]

महाभारते स्वय भगवान श्री कृष्ण शिवस्तोत्रे—

त्व व ब्रह्मा च रुद्रश्च वरुणोग्निमनुर्भव ।
धाता त्वष्टा विधाता च त्वप्रभु सर्वतोमुख ॥१॥

---

१ शुक्लयजुर्वेदे ३।५७
२ वायुपुराणे २४।१२१ १२७ आनन्दाश्रम पूना १८२७
३ श्रीमद्भागवते ८।७।२४ तथा २३ प्रजापति-कृतस्तोत्रे ।
४ तत्रैव ८।७।२९
५ तत्रैव १८।७।३१

त्वत्तो जातानि भूतानि स्थावराणि चराणि च ।
सवत पाणिपान्तश्च सवतोऽक्षिशिरोमुख ॥२॥
सवत श्रुतिमल्लोक सवमावत्य तिष्ठति ।[1]

महाभारतेऽन्यत्रद्रोणपव णि पाशुपतास्त्र प्रसगे श्रीकृष्णेन सहगतोऽजुनस्त शिव तुष्टावतत्राप्ययमवाथ ।

नमोविश्वस्य पतये महता पतये नम ।
नम सहस्र शिरसे सहस्रभुजमृत्यव ॥१॥
सहस्रनत्रपादाय नमो सङ्ख्येय रमणे ।
भक्तानुकम्पिने नित्य सिदध्यता नापर प्रभो ॥२॥[2]

ब्रह्मव वर्ते च भगवाञ्छिवो विश्वेश्वरेशो विश्वकारण विश्वरक्षा कर कथितस्तथा च—

विश्व विश्वेश्वरेश च विश्वेश विश्व-कारणम ।
विश्वाधार च विश्वस्त विश्व कारण कारणम् ॥१॥
विश्वरक्षा कारण च, विश्वघ्न विश्वज परम ।
फलबीज फलाधार फल च तत्फल प्रदम ॥२॥[3]

शिवपुराण च शिव एक एवापर कश्चिन्नास्ति स एव द्यावाभूमी जन यति सव "वाणा प्रभवान्योऽननव भवति । स चादित्यवण प्रस्मात्पर किंचि नास्ति । अणुम्यो पि अणीयान महतश्च महीयान । त्रिकालातीत सर्वेश त्रिगुणाधाराश्च । तत्र चन्द्र सूय विद्युदादयो न भाति । तस्यभासा चेद सव विभाति । तथा च तत्रत्य स्तात्रे—

एक एव तदारुद्रो न द्वितीयोऽस्ति कश्चन ।
समृज्य विश्वभुवन गाप्तात सवुकोच च ॥१॥
विश्वतश्चक्षुरेवायमुताय विश्वता मुख ।
तथव विश्वताबाहुर्विश्वत पादसयुत ॥२॥
द्यावाभमी च जनयन्दव एकामहेश्वर ।
स एव सत्रदेवाना प्रभवश्चोद्भवस्तथा ॥३॥
हिरण्यगर्भ दवाना प्रथम जनयेदयम ।
विश्वस्मादधिको रुद्रो, महर्षिरिति हि श्रुति ॥४॥
वेदाहमतम्पुरुष महा तमृत ध्रुव सस्थित प्रभु ।
आदित्य-वण तमस परस्तात सस्थित प्रभुम ॥५॥

---

१ महाभारत अन ४५।३६६ ६७ ४०७
२ तत्रैव द्रोणपर्वणि ८ ।६१ ६४
३ ब्रह्मवर्वर्ते १।३।५२ ५६

अस्मान्नास्ति पर किंचित अपर परमात्मन ।
नाणीयोऽस्ति न च ज्यायान तनपूर्णमिद जगत ॥६॥
परस्मिन्कालादवल, स एव परमेश्वर ।
सर्वर्तित्रिगुणाधीशो ब्रह्म साक्षात्परात्पर ॥७॥[१]

महेश्वर पद वाच्य शिव ब्रह्मादयो देवा समुपासते । शिवश्च गुणातीत चतुर्व्यूह ब्रह्मविष्णुवादीना कारणरूप । लीलयाऽखिल । ब्रह्माण्ड सृजति । निष्कल परमेश्वराऽखण्डोऽचिन्त्यश्च प्रकृति पुरुषरूप । तथा च शिवपुराणीय स्तोत्र—

देवोगुणमयातीतश्चतुर्व्यूहोमहेश्वर ।
सकल सकलाधार, शक्तरुत्पत्ति कारणम ॥१॥
सोऽयमात्माश्रयस्यास्य प्रकृते पुरुषस्य च ।
लीलाकृत जगत्सृष्टि रीश्वरत्वे व्यवस्थित ॥२॥
य सर्वस्मात्परोनित्य, निष्कल परमेश्वर ।
स एव च तदाधारस्तदात्मा तदधिष्ठित ॥३॥
तस्मा महेश्वरश्चैव प्रकृति पुरुषस्तथा ।
सदाशिवोभवोविष्णु ब्रह्मा सव शिवात्मक ॥४॥[२]

स्वय शिवाऽमुमथ विष्णु प्राह यत्स निर्विकार । सच्चिदानन्दलक्षणो विश्वस्य सर्गादिहेतु । विभिन्नरूपधारी तथा च—

प्रलयस्थिति-सर्गाणा कर्ताह स गुणो गुण ।
परब्रह्मनिर्विकार सच्चिदानन्द-लक्षण ॥१॥
त्रिधाभिन्नोह्यह विष्णो, ब्रह्मविष्णुहराख्यया ।
सगरक्षालयगुण निष्कलोऽहसदा हर ॥२॥[३]

शिव सर्वान्तर्यामी जगदादिरनन्तबाहूदरचरण । त्रिनेत्र पचवक्त्र दशभुजस्तथा च शिवस्तवराज—

सर्वान्तरस्थ जगदादि हेतु कालमात्मानमनन्तपादम ।
अनन्तबाहूदरमस्तकाभ ललाट नेत्र भजचन्द्रमौलिम ॥[४]

शिवरक्षास्तोत्रे—

गौरी विनायकापेतम् पचवक्त्र त्रिलोचनम ।
शिव ध्यात्वा दशभुज शिवरक्षापठन्नर ॥२॥[५]

---

१ शिवपुराण वायवीय स पूर्वखण्ड ६।१४ १६ तथा ४।६
२ तत्रव १०।६ १२
३ तत्र रुद्र स० सृष्टिखण्ड ६।२७ २८
४ शिवस्तवराजस्तोत्र ४२
५ शिवरक्षास्तोत्र, २

अयत्रापि शिव पचवक्त्र त्रिनेत्र वेदाभयवराङ्कुश-पाश टङ्क-कपाल ढक्काक्षशूलपाणिरुक्तस्तथा च शिव कवच-स्तोत्रे—

वेदाभयेष्टांकुश पाश-टङ्ककपाल ढक्काक्षशूल पाणि ।
सितद्युति पचमुखोऽवता मामीशानमव्यपरमप्रकाश ॥१॥[1]

क्वचित् चतुर्मुख उक्त । तत्रापि कुठार-वेद कुशादिधारी । तथा तत्रैव—

कुठार वेदाकुश-पाश शूल-कपाल ढक्काक्षगुणा दधान ।
चतुर्मुखोनीलरुचि, त्रिनेत्र पायादघोरोदिशिदक्षिणस्याम् ॥[2]

शिवस्य पचमुखाना सन्ति सद्योजातवामदेवाघोरतत्पुरुषेशाना । द्वयो मुखयोर्ध्यानिदशनीत्रावुक्तौ ।

प्रदीप्तविद्युत्कनकावभास विद्या-वराभीति-कुठार पाणि,
चतुर्मुखस्तत्पुरुषस्त्रिनेत्र प्राच्या स्थित रक्षतुमामजस्रम् ॥१॥
कु देदुशखस्फटिकावभासो वेदाक्षमाला-वरदाभयाङ्क ।
त्र्यक्षश्चतुर्वक्त्र उरु प्रभाव सद्योधिजातोऽस्तु मा प्रतीच्या ॥२॥
वराक्षमालाभयटङ्कहस्त सरोज किंजल्क समानवर्ण ।
त्रिलोचनश्चारुचतुर्मुखो मा पायादुदीच्यादिशि वामदेव ॥३॥[3]

अस्य रथ पृथवी सारथिर्ब्रह्माधनुर्हिमालय रथचक्र चन्द्र-सूर्यो । विष्णु शर इति तथा च शिवमहिम्न स्तोत्रे—

रथ क्षोणीयन्ता शतधृतिरगेन्द्रो धनुरथो
रथाङ्गे चन्द्राकौं रथचरण-पाणी शर इति ।
दिधिक्षोस्ते कोऽयं त्रिपुरतृणमाडम्बरविधौ,
जगद्रक्षाय त्वं नटसि ननुवामव विभुता ॥१॥[4]

## फलितार्थ

भगवाच्छिवो यस्य वाचक प्रणव सकलतत्वरूप सकललोक-कर्ता सर्वेषाममपकरोऽक्षयो निरामयासगो निर्मल-सर्वाधारो निराधारो नित्य शुद्धबुद्ध चेतनो महारौद्र भ्रातद खदवाग्नि कपालमाला-खड्गचर्म पाशाङ्कुशडमरु-शूलचाप शरगदा शक्ति तोमरादिधारी सहस्रमुखो विकटाट्टहास सर्वोपद्रव डाकिनी शाकिनी भूत प्रेत पिशाच कुष्माड-वेताल राक्षसादि भय विदारक त्र्यम्बकोवष (धर्म) वाहनोविश्वतोमुखश्चास्ति । तथा चामोघशिव कवचे—

ओम् नमोभगवते सदा शिवाय सकल-तत्त्वात्मकाय सकल-तत्त्व

---

१ शिवकवचस्तोत्रे १२
२ तत्रैव १२
३ तत्रैव ११ १३ १४
४ शिवमहिम्नस्तोत्रे, १८

विहाराय सकल लोकैककर्त्रे सकल लोकक मर्त्रे सकललोकहर्त्रे सकल लोकैकगुरवे सकललोक साक्षिणे सकल निगम गुह्याय-सकल दुरितार्तिभजनाय सकल जगदभयकरसकल लोकैकशकराय शशाक नेखराय शाश्वत निजाभासाय निर्गुणाय निरुपमाय निराभासाय निरामयाय निष्प्रपचाय निष्कलकाय निरसगाय निर्मलाय निगमाय नित्य रूप विभवाय निरुपम विभवाय निराधाराय नित्यशुद्ध बुद्ध परिपूर्णसच्चिदानन्दा द्वयाय परमशान्तप्रकाशतेजो रूपाय जयजय महारौद्र-महावतार दु ख दावदारुण महाभैरव काल भैरव कल्पान्त भैरवकपाल मालाधर-खट्वाग चर्म-पाशाकुशडमरुशूल चापबाण-गदा शक्ति-भिन्दिपाल तोमर मुसल मुद्गर परशु परिघ भुशुण्डी शतघ्नी चक्रायुध भीषणकरसहस्रमुखदष्ट्राकराल-विकटाट्टहास विस्फारित-ब्रह्माण्ड मण्डल-नागेन्द्र-कुण्डल नागेन्द्रहार नागेन्द्र वलय सदाशिवनमस्ते । [1]

अस्य शक्तिरमा हैमवती जगज्जननी । पुत्रौ हेरम्बषडाननौ यौ च सर्वतो शिवनानामृताशनौ ब्रह्मादिदेव-सत्कृतौ सर्वलोकरक्षाकरण-तत्परौ । तथा च शिव-पुराणे—

सदाशिवाकमारूढा शक्तिरिच्छा शिवाह्वया ।
जननीसवलोकाना प्रयच्छतु मनोरथम् ॥१॥
शिवयोर्दयितौ पुत्रौ देवौ हेरम्बषणमुखौ ।
शिवानुभावौ सर्वज्ञौ शिवज्ञानामृताशिनौ ॥२॥
तृप्तौ परस्पर स्निग्धौ, शिवाभ्या नित्यसत्कृतौ ।
सत्कृतौ च सदा देवौ ब्रह्माद्यैस्त्रिदश सह ॥३॥
सर्वलोक परित्राण कर्तुमभ्युदितौ सदा ।
स्वेच्छावतार कुर्वन्तौ, सर्वांशभेदैरनेकश ॥४॥ [2]

शिवस्याष्ट—मूर्तयस्तत्पत्न्यश्च—

वामोज्येष्ठस्तथा रुद्र कालोविकरणस्तथा ।
बलोविकरणश्चैव बल प्रमथन पर ॥१॥
सवभूतस्य दमनस्तादशाश्चाष्टशक्तय ॥[3]

भवशर्व रुद्रादीना तत्त्वप्रतीकत्व तु महानिर्वाण-तन्त्रे—

शर्व क्षिति समुद्दिष्टा भवो जलमुदाहृत ।
रुद्रोऽग्निरुग्रो वायु स्यादभीम आकाशशब्दित ॥ १॥

---

१ स्कन्दपुराणे ततीये ब्रह्मोत्तरखण्ड सीमन्तिनी माहात्म्ये द्वात्रिंशो अध्याय—मनसुखराय मोर कलाइव रोड कलकत्ता

२ शिवपुराण वायवीय संहितायाम् ३१।२२ २५

३ तत्रैव ४७।४८

यस्य प्रतियजमान महाश्व मुधावर ।
ईशान मृष इयम मूर्याच्यो प्रतीति ॥२॥[1]

६ मन्त्रगायत्र्यादीनि—

एतावत्पर्यालोचनेन स्पष्टमस्ति यद्भगवान् शिवाभास्वैव । तदुपासना चाविच्छिन्नपरम्परया प्रचलति । तस्य गायत्र्योऽपि प्राप्यन्ते तत्र परिवर्तिता अपि सन्ति यत्र विविधनाम्ना मिलन्ति तथा च—

महानारायणोपनिषदि—

१ 'पुरुषस्य विद्महे सहस्राक्षस्य महादेवस्य धीमहि तन्नो रुद्रः प्रचोदयात् ।'[2]

२ 'तत्पुरुषाय विद्महे महादेवाय धीमहि तन्नो रुद्रः प्रचोदयात्'[3] (अत्र तत्पुरुष महादेवान्याच्चतुर्थापूर्विकारुद्रो) ।

३ 'सदाशिवाय विद्महे सहस्राक्षाय धीमहि तन्नः साम्ब प्रचोदयात् ।'[4]

४ 'तत्पुरुषाय विद्महे महादेवाय धीमहि तन्नो रुद्रः प्रचोदयात्'[5] (द्वितीय चतुर्थपादयोर्भेदः) ।

५ अग्निपुराणे—

'तन्महेशाय विद्महे महादेवाय धीमहि तन्नः शिवः प्रचोदयात् ।'[6]

बीजमन्त्रः ह्रौं[7]

पञ्चाक्षरो मन्त्रः 'ओम् नमः शिवाय'[8]

## विशिष्ट-स्तोत्राणि

१ अर्द्धनारीश्वर-स्तोत्रम्—

अथोऽत्रार्द्धनारीश्वरस्य भगवतः शिवस्य वर्णनम् । यस्यार्द्धभागेन नारी चार्द्धेन पुरुषोऽस्ति तदेव नाम । पुष्पिकायामपीत्थमेव नाम तथा च—

इति श्री मत्परमहंसपरिव्राजकाचार्यस्य श्री गोविन्द भगवत्पूज्यपादशिष्यस्य श्रीमच्छङ्करभगवतः कृतौ अर्द्धनारीश्वरस्तोत्रं सम्पूर्णम् ।[9]

---

१ महानिर्वाणतन्त्र १४।१८ ७६ कुलावधूतहरिहर
२ महानारायणोपनिषदि मयूर १।२२ पृ० ४५
३ तत्रैव १।२३ पृ० ४७
४ तत्रैव ३ पृ० ५६
५ तन्त्रसारे पृ० ६८
६ अग्निपुराणे ३१७।७
७ शारदातिलके कलकत्ता १९३३ पृ० ५६४
८ तत्रैव १८।२
९ शङ्करग्रन्थावल्याम् ११ सम्पुट, द्वितीय संस्करण पृ० ३२

प्राचार्य शंकरेण रचितमिदमत्रश्लोका —८ । स्तोत्रकर्ता चाचार्यशंकर शंकरग्रन्थावल्या ११गे सम्पुट अन्यत्र च प्रकाशितम् ।

स्तोत्रस्यास्य नित्यपाठेन नरोमान्यो दीर्घजीवी समस्त सिद्धियुतोऽनन्त काल सौभाग्ययुतस्तिष्ठति । तथा च तत्रैव—

एतत्पठेदष्टकमिष्टद यो भक्त्या स मान्यो भुविदीर्घजीवी।
प्राप्नोति सौभाग्यमनन्तकालम् भूयात्सदातस्य समस्तसिद्धि ॥१॥[1]

स्तोत्रमिद सगीतात्मक सप्रसाद सगीनमय वर्णमध्याद्यादिमियुत । पदेनक्व श्लोवाचकमपरेण पुरपवाचक रम प्रवाहमयमतीवानन्दम् । जनानाकर्षति । एकमुदाहरणद्रष्टव्यम ।

कस्तूरिकाकुङ्कुमचर्चिताय चितारज पुजविचर्चिताय ।
कृतस्मराय विकृतस्मराय नम शिवायै च नम शिवाय ॥[2]

## २ कुबेरकृत शिव स्तोत्रम्

भगवत शिवस्यद स्तोत्र कुबेरेण कृतिमितितदेवनाम[3] । स्तोत्राभिधान पुस्तकेऽपि[4] स्तोत्रेण यऽपि कश्चिदत्र भक्त्या प्रस्तुवति भुवनकनाथम । [5] उपक्रमऽपि स्तोत्रेणानेन तुष्टावति ।

सौरपुराणे ४७ तमध्याय ६३ तम श्लोकमारम्य ८३ तम यावत । श्लोका २१ । स्तोत्रकर्ता कुवर । स्वधुनीतटऽरुन्धती सावित्री सम्वादे ।

स्तोत्रस्यास्य पाठेन नरस्य शिवसायुज्यप्राप्ति । तत्रैव

स्तोत्रेणयऽपि ककचिदत्रभक्त्या प्रसस्तुवन्ति प्रथमकनाथम ।
प्रयाति तनवहात्ववार । पुरदरोदृणीत महाप्रभावा ॥१॥[6]

उपेन्द्रवज्रावच्छिन्नत्रादौ शिवस्वरूपवर्णनम् । तन्त्र सूर्य दुर्वह्नि सम वपलाञ्छन पिनाकपाणिशूलहस्तम् काल कूटान्वित सस्फटिक । प्रन भगवान शिव पुरुषसूक्तानुसार सहस्र शीर्षा सहस्र मूर्ति वर्णित विष्णु पितामहादया-प्यस्य वल न विदु । तथा च—

न यस्य रूप न बलप्रभावो न च स्वभाव परमस्यपुस ।
विनायत विष्णु पितामहाद्य, तवामन्य प्रणमाम्यचिन्तयम ॥[7]

---

१ शंकरग्रन्थावल्याम ११ सम्पुटे द्वितिय सस्करण पृ० १२०
२ तत्रैव पृ० ३१८ श्लो० २
३ सौरपुराण पृ० १८०
४ तत्रैव ४७।८३
५ तत्रैव ४७।६२
६ सौरपुराण ४७।८३
७ तत्रैव ४७।७६

स्तोत्रस्यास्य प्रभावेण कुबेरो गुह्यकराज जात भाषात्र सरला पौराणिकी प्रवाहमयी सानुप्रासा ।

## ३ दक्षकृत शिवस्तोत्रम (स्तव)

दक्षेण कृतत्वात्तदेव नाम फल-कथने च दक्ष प्रोक्त स्तव चापि[3] अध्यायान्ते पुष्पिकाया चेदमेव नाम । तथा— ' इति श्री ब्रह्मपुराणे स्वयम्भूऋषिसम्वादे दक्षस्तवननिरूपण नामाष्टत्रिंशोऽध्याय ॥ '[4]

ब्रह्मपुराणे ३८ तमेऽध्याये[1] १य श्लोकत १०० तम यावत । फल कथन तु १२० तमत १३७ तम यावत् । श्लोका १०८ ।

दक्ष-यज्ञे विनष्टे ब्रह्मादयो देवा शिवमुपेत्य त तुष्टुवु तेषा प्रार्थनया शिवो हतागान् तान् जीवयामास । सुप्तोत्थित इव दक्ष शिव तुष्टाव । स्तोत्र-कर्तादक्ष फल चास्य स्तोत्रस्य पाठेन श्रवणेन च यश स्वर्गादिप्राप्ति । तथा च—

दक्ष प्रोक्त स्तव चापि कीर्तयेदय शृणोतिवा ।
नाशुभप्राप्नुयात्किंचित दीर्घमायुरवाप्नुयात ॥१॥
यश स्वर्ग सुरत्वच वित्तादि जय काक्षिभि ।
स्तोत्रव्यो भक्तिमास्थाय विद्याकामश्चयत्नत ॥२॥
शृणुयाद्वा इद सव कीर्तयेतवाप्यभीक्ष्णश ।
तस्य सर्वाणिकार्याणि, सिद्धिगच्छन्त्यविघ्नत ॥३॥
मनसा चिन्तितयच्च यच्चवाचाप्युदीरितम,
तत्तत्सम्पद्यते तस्य स्तवस्यास्यानुकीर्तनात् ॥४॥
पठ दक्षकृत स्तोत्र सवपाप प्रमुच्यते ।
मृतश्च गणसायुज्य, पूज्यमान सुरासुर ॥५॥[4]

अनुष्टुपछन्द सरलाभाषात्र भगवतोऽष्टाधिकसहस्रनाम्ना कीर्तनम । कानिचिदप्रसिद्धानि अपि शतोदर शतानन शतजिह्व सनातन गजकर्ण त्रिजटादीनि ।[5]

## ४ द्वादशलिंगस्तोत्रम्

भगवत शकरस्य द्वादशलिंगाना स्तोत्रत्वात्तदेवनाम । तथा चोक्त पुष्पिकाया इति श्रीमत्परमहस परिव्राजकाचार्यस्य श्री गोविन्दभगवत्पूज्य

---

१ ब्रह्मपुराण कलकत्ता स० १९४० अ १८।१२१ पृ० ३७
२ तत्रैव
३ तत्रैव पृ० ५४।२६
४ ब्रह्मपुराणे ३८।१२१, १२३ १२८ १२९ १३३
५ तत्रैव ३८।१३३ ४

पादशिष्यस्य श्रीमच्छंकरभगवत कृतौ द्वादशलिंगस्तोत्र सम्पूर्णम्।"[१]

रचयिता चास्य स्तोत्रस्याचार्य-शंकर श्लोका १३।

स्तोत्रस्यास्यपाठेन पुत्र पौत्र धनदारादि सत्कीर्ति प्राप्ति तथा चोक्तम तत्रय—

एतानि लिंगानि सदव मत्या प्रात पठन्तोऽमल मानसाश्च।
ते पुत्र-पौत्रश्च धनदुदार सत्कीर्तिभाज सुखिनोभवन्ति ॥१॥[२]

स्तोत्रेऽस्मिन सोमनाथ मल्लिकार्जुनमहाकालोंकार-नाथवैद्यनाथ-नागनाथ विश्वनाथशंकर रामेश्वर त्र्यम्बक केदार घिषणेश्वरेति द्वादश लिंगानाम् सौराष्ट्र श्रीशैलावंति कावेरिपारालिकनमवाराणसी भीमाताम्र पर्णी गोदातीर-हिमालयलापुर निवासिना चर्चा।[३]

नाम गणनात्मकमिद स्तोत्रमतीवसरलम भारतस्य विभिन्नस्थानेषु स्थितानामेतेषा दर्शनेन भारतस्य भौगोलिकज्ञानमान्तरकय च परिज्ञायते यत्र प्रान्तजाति भेदान विचार्य्यैव जना सहस्रश समागत्यात्मन कृतार्था मन्यन्ते।

## ५ द्वादशज्योतिर्लिंगस्तोत्रम्

यतोऽत्र भगवत शिवस्य द्वादश लिंगाना चर्चाप्रतस्तदेव नाम।

श्री शिवमहापुराण कोटि रुद्र सहितायां प्रथमाध्याये[३] विंशतितम श्लोक-मारभ्य सप्त विंशतितम यावत। ७ श्लोका तत्र तत्रानेक-सकलनेषु बृहत्स्तोत्र रत्नाकरादिषूद्धृतम्।

प्रातरुत्थायास्य पाठेन नर सर्वपाप विनिर्मुक्त सर्वसिद्धिफल लभते। यदुद्दिश्य करोति तदेवाप्नोति। निष्कामतया ये पठिष्यन्ति तेषा वास जननीगर्भे न भवति। तथा च—

द्वादशतानि नामानि प्रातरुत्थाय य पठेत।
सर्वपापविनिर्मुक्त सर्वसिद्धि फल लभेत् ॥१॥
य य काममपेक्ष्यव, पठिष्यन्ति नरोत्तमा।
प्राप्स्यन्ति काम त तर्हि परम ह मुनीश्वरा ॥२॥
ये निष्कामतया तानि पठिष्यन्ति शुभाशया।
तेषा च जननी गर्भे वासो नवभविष्यति ॥३॥[५]

सरल समासरहितप्राय अनुष्टुपछन्दोबद्धमिदम सानुप्रास सप्रसाद सुबोधम्।

---

१ शंकरग्रन्थावल्यां पृष्ठे ३१७
२ शंकर ग्रन्थावल्यां श्लो १३
३ तत्रैव १ १२ श्लो०
४ शिवपुराण पण्डित पुस्तकालय काशी पृ ६७१
५ शिवपुराणे पण्डितपुस्तकालय काशी ६७२

## ६ धातृकृत शिव-स्तोत्र

धात्राब्रह्मणा शिवस्य स्तोत्र कृतमतस्तदेव नाम । फल-कथनावसरे चास्य दमेव नाम इद धातृ-कृतस्तोत्रम सङ्कटे य पठेन्नर ।[1]

ब्रह्मवैवर्ते ४थ खण्डे ४८तमे ऽध्याय १०म श्लोकमारभ्य १८श श्लोकान्त। श्लोकसंख्या ६ । स्वतेजसा रजनीमपि दिनकरिष्याव इति । विमोहितो मालि सुमालिनो रवि मसीचकार। तदा भक्तपालनपर शकरो भगवान सूय योदधुमा गत । तदा धातद स्तोत्र चकार ।

स्तोत्रस्यास्य पाठेन नर सकटाद्विमुक्ति प्राप्नोति भीतो भयात् बद्धो बन्धनात्प्रमुच्यत तथा च तत्रव—

इति धातृ-कृत स्तोत्र, सक्टे य पठेन्नर ।
भयात्प्रमुच्यतेभीतो, बद्धो मुच्येत् बन्धनात ॥१॥
राजद्वारे श्मशान च अग्नपोते महार्णवे ।
स्तोत्र स्मरण मात्रेण, मुच्यते नात्र सशय ॥२॥[2]

अनुष्टुबछन्दसा सरलया भाषया समलकृतमिद स्तोत्र । भगवाछकरोऽत्र सृष्टि स्थित्यन्त-हेतु प्रोक्त स्वय सूय सृष्ट्वा तत्प्रणाशन नोचितमित्याह । तथा च—

ब्रह्मस्वरूपोभगवा सृष्टिस्थित्यन्तकारण ।
स्वय रविंच निर्माय स्वय, सहतु मिच्छसि ॥१॥[3]

शिव एव ब्रह्मशेषोधम सूर्यो हुताशन इन्द्र चन्द्रादय ऋषयो मुनयश्च ॥[4]

## ७ ब्रह्मादिदेवकृत स्तोत्रम्

यतोऽत्रब्रह्मादि-देवा स्तोत्रमकुर्वन् । अतस्तदेव नाम ।

स्तोत्रमिद शिवमहापुराणे युद्ध-खण्डे एकादशेऽध्याय द्वादशश्लोकमारभ्य ४१तम यावत् । ३० श्लोका त्रिपुरदाहे रुद्रस्य भमी तनु समालोक्य ब्रह्मादि देवाश्चक्रु ।

पौराणिकस्यास्य स्तोत्रस्य श्रवणेन पाठेन नर अभीष्टसिद्धि प्राप्नोति तथा च ।

---

१ ब्रह्मवैवर्त ४।४८।१७
२ तत्रैव ४।४८।१७ १८
३ तत्रैव ४।४८।१२
४ ब्रह्मवैवर्त ४।४८।१३ १४

स्तवरेतश्च तुष्टोऽस्मि, दास्यामिसवदाध्रुव ।
यदमीप्सतम लाके पठतां शृण्वता सुरा ॥१॥[1]

स्तोत्रेऽत्र भगवत शकरस्य त्रिपुरदानव विनाशकथा सक्षेपेन कथिता। तस्य भगवतोऽगुण सगुणोभयविधरूपस्य चर्चा। निगु णत्वे स परात्पर । जन पालनविमुवरणीय । जनान ददातास्ति । स स्वेच्छया जगत समग्र काय करोति । ओंकार-स्वरूप महेश्वर । सकल कारण भूत । जगत्प्रपचस्य द्रष्टा ऽध्यक्षश्च स एव सव जनेभ्य कर्मानुकूल फल ददाति ।

अनुष्टुप् छन्द सरला प्रवाहमयी पौराणिकी भाषा। समासहीनाल्पस मासा च। पठनमात्रेण अर्थावबोधोऽस्यवशिष्टयम्। श्रुतमात्रेण भ जन अथ जानाति ।

ओंकाराय नमस्तुभ्य ओंकारपरतारक,
प्रसीदसवदेवेश, त्रिपुरघ्न महेश्वर ॥१॥[2]

## ८ महेश्वर-स्तोत्रम्

विष्णुनाकृत महेश्वरस्य स्तोत्र सूच्यामिदमवनाम[3] फल-कथनेऽपि एतत्स्तोत्र वर पुरायमित्यादिनाऽस्य[4] स्तोत्रत्वम ।

लिंगपुराणे १८ाध्याये १म श्लोकत ४२ तम यावत श्लोक-सख्या ४२ । भगवान्विष्णु स्तोत्र-कर्ता ।

स्तोत्रस्यास्य पठनेन पाठनेन च सवपापकर्मासक्तोऽपि सवपाप विनि मुक्तो ब्रह्मलोक याति । अतो निखिलाधमोचनाय नित्य पठितव्य श्रोत य च । तथा च—

एतत्स्तोत्रवर पुराय सवपाप प्रणाशनम ।
य पठेत् श्रावयद्वापि ब्राह्मणान्वेद पारगान ॥१॥
स याति ब्रह्मणो लोके पाप-कम रतोऽपि वै ।
तस्मात जपेत्पठेत नित्य श्रावयद ब्राह्मणान शुभान ॥२॥[5]

सरले सप्रसङ्गेऽस्मिन्नादौ ओंकार वाच्य शिव इति कथनम । अकारो रुद्ररूप उकारा विद्याघ्यादिदेवा मकार परमात्मरूप शिव । स च सूर्याग्नि सोमवणा रुद्र सद्‌तु त्वादग्निरूप ।

---

१ शिवपुराणे (पण्डित पुस्तकालय काशी) अ० स० पृ० ४५० श्लो० ११।४०
२ तत्रैव पृ० ४।४८।११।१२
३ लिंगपुराणे पृ० १
४ लिंगपुराणे पृ २७।११।१८।४४
५. तत्रैव १।१८।४० ४१

एकाक्षराय रुद्राय अकारायात्मरूपिणे।
उकारायादिदेवाय, विद्यादेहाय व नमः ॥१॥
तृतीयाय मकाराय, शिवाय परमात्मने।
सूर्याग्निसोमवर्णाय यजमानाय वनमः ॥२॥[1]

सद्योजात-वामदेवाघोरेशान शिवेतिपञ्चप्रसिद्धानि[2] नामानि पञ्चभूतात्मकानि शब्दादिविषयात्मकानि। तत स्वरूपकथनम्॥ चारूपोऽपि सरूप। श्वेतवर्ण सुवक्त्रामम्मदिव्य। सपकुण्डली सर्पोपवीतीति।[3]

## ६ महेश्वरस्तोत्रम्

भगवतो महेश्वरस्य स्तोत्रम्।[4] फलकथनेऽपीदं नाम्। एतत्स्तोत्र महेशस्यप्रोक्त सर्वाघनाशनम्।[5] उपक्रमेऽपि शृणुनारद वक्ष्यामि दिव्य माहेश्वर स्तव।[6]

नारद पुराण ६१ तमऽध्याय २१७ तममारभ्य २३५ तम यावत। श्लोका १६। नारद श्रोता महेशो वक्ता।

स्तोत्रमिद सर्वपाप विनाशनम्। शिवतुष्टिद च सर्वाभिलापपूरकम्। तथा च—

एतत्स्तोत्र महेशस्य प्रोक्त सर्वाघनाशनम्।
शिवसान्निध्यद विप्र सर्वतन्त्रप्रकाशकम् ॥१॥
एतद्ध सुमहत्पुराय सर्वदेवप्रकाशकम्।
लोकाभिलाप सपूर्ति श्रिया - साधनसगतम् ॥२॥[7]

भगवाञ्छिव पञ्चमहाभूतमूर्ति सर्वग स्थूलसूक्ष्मविभागहितश्चास्ति। देवा स्वकिरीटकोटिभिरस्य चरण रज समुपासनते। सरला सप्रसादा भाषा अनुष्टुपछन्द।

भक्ताय निजभक्तानां भुक्तिमुक्तिप्रदायिने।
निवासम निवासाय विश्वेषा पतये नम ॥[8]

शिवस्य पञ्चमहाभूतप्रतीकत्वेननिखिल जगत् तन्मयमिति समायातम्।

---

१ लिंगपुराणे १।१८।१ २
२ तत्रव १।१८।२ ६
३ तत्रव १।१८।३८
४ नारदपुराण, पृ० २१४
५ तत्रव पृ ३१४ श्लोक १।६१।२३०
६ तत्रव ६१।२१७
७ तत्रव १।६१।२२ २३१
८ तत्रव १।६१।२२७

सर्वदा अस्य पादपद्मं समुपासनं तपन्ति [illegible] ।

## १० मृत्युंजय मानसिक-पूजा स्तोत्रम्

यतोऽत्र बाह्योपचारापेक्षया मानसिकोपचाराणां [illegible] । [illegible] भगवतो वर्णनमतस्तदेवनाम । पुष्पिकायामप्येतन्नाम । यथा च—

इति श्री मत्परमहंसपरिव्राजकाचार्यस्य श्री गोविन्द—[illegible] शिष्यस्य श्रीमच्छंकर—भगवत कृतौ श्रीमृत्युंजय मानसिक-पूजा-स्तोत्र सम्पूर्णम् ॥[1]

आचार्य भगवत्पादश्रीशंकराचार्य-कृत मिदम् अत्र ४६ [illegible] ।

स्तोत्रस्यास्य प्रात पाठेन स्वर्ग प्राप्तिमध्याह्ने च [illegible], [illegible] च मोक्षदमानोऽस्त-समयेप्रदोष-समय पंचाक्षरायतनेन [illegible] । तथा च—

प्रातर्लिंगमुमापतेरहरहः सन्दर्शनात्स्वर्गदम् ।
मध्याह्ने हयमेधतुल्यफलदं सायन्तने मो[illegible] ॥५॥
भानोरस्तमये प्रदोषसमये पंचाक्षराराधनम् ।
तत्कालत्रयतुल्यमिष्ट—फलदं सद्योऽनवद्यं [illegible] ॥७॥[2]

आदावत्रभगवत शिवस्य स्वरूप वर्णन[3] तत्र [illegible] कात्यायनीसेवित गंगा-तुंग-तरंगरंजितजटाभस्मा [illegible] । [illegible] आवाहनादिक षोडशाद्युपचारवर्णनम् । सरलासुबोधा[illegible] ।

## ११ रुद्रसहस्रनाम स्तोत्रम

भगवतोरुद्रस्य सहस्रनाम्ना परिकीर्तन [illegible] । [illegible] नाम ।[4] उपक्रमे च अष्टोत्तर सहस्र तु नाम्ना [illegible][5] [illegible] पुष्पिकायां च ।

इति श्री लिंगपुराणे पूर्व भागे रुद्र सहस्रनाम[illegible] [illegible]ऽध्याय ।[7]

---

१ प्रकरणपावल्या पृष्ट ११५
२ तत्रैव श्लो० ४६
३ तत्रैव प० १०५ श्लो० १
४ तत्रैव ३ ३६ श्लोका
५ लिंगमहापुराणे प० १
६ तत्रव १।६५।५३
७ तत्रव पृ० १०५

लिंग पुराणे ६५ तमेऽध्याय ५३ तम श्लोकमारभ्य १७५ तम यावत । श्लोका १२२ । मृताऽत्रप्रवक्ता ।

स्तोत्रस्यास्य पाठेनाश्वमेधसहस्रजन्य फल प्राप्नोति ब्रह्महा सुरापी स्तेयी गुरुतल्पग शरणागतघाती च पापाद विमुक्ता भवन्ति । तथा च—

य पठेत शृणुयाद्वापि श्रावयेद ब्राह्मणानपि ।
अश्वमेध सहस्रस्यफल प्राप्नोति वद्विजा ॥१॥
ब्रह्मघ्नश्च सुरापश्च, स्तेयी च गुरुतल्पग ।
शरणागत घाती च मित्रविश्वासघातक ॥२॥
मातृहापितृहा चव, वीरहा भ्रूणहा तथा
सम्वत्सर क्रमात जप्त्वा, त्रिसन्ध्यन्शराश्रमे ॥३॥
न्वमिष्ट्वा त्रिसन्ध्ये च सर्वपापै प्रमुच्यते ॥४॥[1]

स्तोत्रऽस्मिन्सहस्रनाम्ना परिगणनम् । तत्र कानिचिदप्रसिद्धानि यथा भानु ।[2] शिखण्डी हरि हरिणाक्षो वामन अमद राजा[3] दशबाहु कमण्डलु धर निजटी सहस्रहस्त हयश्च वीणी पणवी वासव सहस्रयुक विष्टम्भी वाजसन इतिहास कलि मवामेघनिवासी[4] महास्वन गीतसाधक, उपहार गणकारादीनि ।

## १२ विष्णु कृत शिवस्तोत्रम

विष्णुनाब्रह्माणमग्रत कृत्वा कृतमिति तन्नाम्ना निर्देश । सूच्याम पीदनाम ।[5] उपक्रमे च नामभि छान्दसश्चैव इद स्तोत्रमुदीरयत् ।'[6]

लिंगपुराणे २१तमऽध्याय २४श्लोकमारभ्य ६१ तम यावत । ६० श्लोका स्तोत्रकर्ता विष्णु ।

य इद स्तोत्र भक्त्या कीर्तयति श्रावयति शृणोति वा सोऽश्वमेधशतस्य फल लभत । पापयुक्तोऽपि शिवसन्निधौ शृणोति जपति वा सब्रह्मलोक गच्छति । तथा च—

य इद कीर्तयेद भक्त्या ब्रह्मनारायण-स्तवम ।
श्रावयद्वा द्विजान विद्वान शणुयाद्वासमाहित ॥१॥

---

१ लिंगमहापुराण १।६५।१७२ ७३ ७४ ७५
२ तत्रव १।६५।६४
३ तत्रव १।६५।५६ ५६
४ तत्रव १०१ १६३
५ तत्रव १० १
६ तत्रैव १।२१।२

पापाचारोऽपि यो मर्त्य शृणुयाच्छिव-सन्निधौ ।
जपेद्वापि विनिर्मुक्तो ब्रह्मलोक स गच्छति ।।२।।
श्राद्धे वा दैविके कार्ये यज्ञे वावभृथान्तिके ।
कीर्तयेद्वा सतामध्ये स यातिब्रह्मणोऽन्तिके ।।३।।[१]

अत्र चतुर्थ्यन्तनमोऽन्त-नामभि [२] स्तवनम । वदिक पौराणिक-नामान्यपि । सद्योजातशूलि-पष्ठादीनि । सर्वे वेदा साङ्ख्ययोगादि दर्शनानि चास्मादेव जायन्ते । अयमणोरणीयान्महतो महीयानिति । तथा च—

अणवे महते चैव नम, सर्वगताय च ।
नमोऽवन्धायमोभाय नम स्वर्गाय नरकाय च ।।१।।[३]

सर्वत पाणिपाद[४], हृव्यकव्यरूप स्थूलसूक्ष्म । सरलाभाषा शान्तु प्रासाऽनुष्टुप छन्द ।

१३ शार्व स्तव

शर्वस्यभगवतो महादेवस्य स्तवनरवादिदमेव नाम । पौराणिक नाम ।[५]

पुष्पिकाया च—

इति श्री वायु महापुराण वायु प्रोक्ते शार्वस्तवोनाम चतुर्विंशोऽध्याय ।[६]

वायुपुराण २४तमे ध्याये ८६तम श्लोकमारभ्य १६५ तम यावत । श्लोका ७७ । स्तोत्रकर्ता गरुडध्वजो भगवान् । तथा च—

ब्रह्माणमग्रत कृत्वा तत स गरुडध्वज ।
नामभि छान्दसश्चैव इद स्तोत्रमुदीरयेत ।।१।।[७]

स्तोत्रस्यास्य पाठेन नरो न केवलमहिकमपितु दिव्यान्भोगान्प्राप्नोति

तथा च—

येऽन्ये मर्त्यास्तव प्रपन्ना विशुद्धा
त कर्मभिर्दिव्यभोगान्भजन्ते ।।१।।[८]

सरले सानुप्रासे प्रसाद सम्वलितऽत्रभगवत शिवस्य चतुर्थ्यन्तपद नमोऽन्त नामाभि स्तवनम् । शिवो भगवाननेक रूपो निखिलदर्शनाना प्रभव

---

१ लिङ्गपुराणे १।२१।८६ ९१
२ तत्रव १।२१।२० २८
३ तत्रव १।२१।२६
४ तत्रैव १।२१।३२।६६
५ वायु महापुराणे ७१
६ तत्रैव ७४
७ वायुमहापुराणे २४।६०
८ तत्रव २४।१६४

'नमो योगस्य प्रभवे सांख्यस्य प्रभवे नमः' समेधा रसन्तेजसः धातूनामादि, निमेषादि सगान्तानां कालानां हेतु । स्वेच्छोपात्तवपु । तथा च—

सांख्या प्रकृतिभ्य परम त्वा विदित्वा
क्षीणाध्यवसानास्ते न मृत्यु विशन्ति ॥१॥
योगेन त्वा ध्यानिनो नित्ययुक्ता
ज्ञात्वाभोगा सत्यजन्ते पुनस्तान ॥२॥[1]

## १४ शिवकवचस्तोत्रम

कवचस्यास्य शिवमयत्वात्पुराणेऽनेननाम्नैव निर्देशत्वात । 'शिवस्य कवच स्तोत्रम श्रूयतामिति शौनक । [2]

ब्रह्मवैवर्ते १६तमेऽध्याये ३६ तम श्लोकमारभ्य ५४ श्लोकान्तम । श्लोक संख्या १५ ।

सौतिरिद स्तोत्र शौनक प्राह । पुरा वशिष्ठोऽगस्त्यमकथयत् । न ब्रह्मणा च—

रावणाय प्रदत्तम । शिवश्च बाणाय दुर्वाससे च—

इद कवचमतीवगोपनीयमस्य धारणात सर्वतीर्थाना स्नानेन यत्फल लभते तत्फल लभते । यश्चेम्मज्ञात्वा शिवभजते स लक्षजप्त्वापि सिद्धमन्त्रो नभवति । तथा च—

यत्फल सर्वतीर्थाना स्नानेन लभते नर ।
तत्फल लभते नून कवचस्यास्यधारणात ॥१॥[3]
इद कवचमज्ञात्वाभजेद्यो य स मन्दधी ।
शतलक्षप्रजप्तोऽपि न मन्त्र सिद्धिदायक ॥२॥[4]

अनस्तोत्र नुष्टुब्छन्द । सरलया भाषया समलङ्कृतमिद । अत्रादौ सर्व कारणभूतस्य भगवतो महान्वस्य माहात्म्यकथनम । तत ध्यानविनियोगागन्यास करन्यासागरक्षणदिग्रक्षणादिकम । प्रवाहमयी शैली सप्रसादा ।[5]

## १५ शिवकवचस्तोत्रम्

यत्राभगवत शिवस्यस्तवनम । व्यासरचितमिद स्कन्दपुराणनाम्ना संकलनलभ्यत ब्रह्मोत्तरखण्ड । ऋषभोऽस्य प्रवक्ता । श्लोका ४८ । भद्रायुरस्य श्रोता ।

---

१ तत्रैव २४।१६३ १६४
२ ब्रह्मवैवर्त १।१६ ६
३ ब्रह्मवैवर्ते ४६
४ तत्रैव १।१६।५१ ५३
५ तत्रैव ८।१६।४४ ५०

स्तोत्रस्यास्य पाठेन सर्वाबाधाविनश्यति सर्वापदविनिवृत्ति-पूर्वक जयश्मिदम्। तथा च—

निश्शेषपापौघहर पवित्रम्।
जय प्रद सर्व विपदप्रमोचनम्॥

आदावत्र कवचे षडक्षर समुल्लेख-पूर्वकम् करागन्यासादिकम्। विनियोगध्यानादिक अगस्त्या दिग्रक्षणान्ते फलप्रतिपादनम्। अत्र शिव स्वरूप कुठार वेदांकुशपाशशूल-कपाल-ढक्काधारी कथित। अत्र शिव चतुर्मुख कथित। रुद्रोऽयं प्रलयकाले लोका दग्ध्वा नृत्यति। तथा च—

कुठारवेदांकुश-पाशशूल-कपालढक्काक्षगुणा दधान।
चतुर्मुख नीलरुचिस्त्रिनेत्र पायादघोरोदिशि दक्षिणस्याम्॥
कल्पावसानेभुवनानि दग्ध्वा सर्वाणि यो नृत्यतिभूरिलील।
सकालरुद्रो ऽवतुमा दवाग्नर्व्यादमीतेरखिलाच्च पापात्॥२॥[१]

## १६ शिवकेशादि पादान्त-वर्णनस्तोत्रम्

यतोह्यस्मिन्स्तोत्रे शिवस्यकेशानारभ्यपादान्तवर्णनमतस्तदेवनाम। उक्त च पुष्पिकाया इति श्री परमहंसपरिव्राजकाचार्यस्य श्री गोविन्द

भगवत्पूज्यपाद शिष्यस्य श्रीमच्छंकरभगवत।
कृतौ शिव-केशादि-पादान्त-वर्णनस्तोत्रम्॥[२]

पूज्यपादाचार्य शंकर-कृत मिदमत्र श्लोका २६।

स्तोत्रस्यास्य पाठेन रोगादिदोषाणा विनाश भवपारावारात्समुत्तरण च। तथा च—

येषा रोगादिदोषप्रतमतिवयायाति मुक्त प्रसाम्य—
धेत्रा नम्रात्म मूर्ति द्युसदृपि परिपन्मूर्ध्निशेषायमाणा।
श्रीकण्ठस्थाणोरुच्चरण सरसिज प्रोत्थितस्तिमवाप्यात।
पारावारात्तितीर्षो र्दुरितहतिकृतस्तारयेयु परागा॥१॥[३]

समासबहुलमिद स्तोत्रम्। प्रसादौज समन्वितम्।[४] अथगम्भीर सुललित ललितम्। भगवत शिवस्य केश पिशगवर्ण। सर्वापज्जाल निवारणक रज्जु घाराघ विशरणहन।[२] शमद। माहेश मह आम्नाय तत्त्व गुणातीत गहन माहरागनिहतृ।

---

१ शिवकवचे, १२ १७ बृहत्स्तोत्ररत्नाकरयो
२ शंकरग्रन्थावल्या षष्टे ७०
३ तत्रैव श्लो० २६
४ शंकर ग्रन्थावल्या षष्टे ६३
५ तत्रैव श्लो० ७०

सरल सानुप्रास दीर्घ समासयमुतमपि रसिकम त्रजनमन आह्लादकमतीव रुचिरमिद स्तोत्रम ।

१७ शिवनामाष्टकम्

शिवस्याष्टमूर्तेर्नाम्नात्कीतनमत्रातस्तदवनाम ।[1] सूच्याचेदमेवनाम। उपक्रमे च नामाष्टकेन विश्वात्मा। [2]

लिंगपुराण ४१ तमऽध्याय २६ तमम श्लोकमारभ्य ३४ तम यावत श्लोका ६ । स्तोत्रकत्ता पितामह ।

पितामह कृतस्यास्य स्तोत्रस्य पाठेन चाष्टमूर्तिसायुज्यमवाप्नोति नर । तथा च—

य पठच्छणुयाद्वापि पतामहमिमस्तव ।
रुद्राय कथित विप्र श्रावयेद्वा समाहित ॥१॥
अष्टमूर्तेस्तु सायुज्य वर्षादेकादवाप्नुयात ।
एव स्तुत्वामहादेवमवक्षत पितामह ॥२॥[3]

भगवत शकरस्याष्टनाम्ना कीतनमत्राष्टमूर्तिरूपम । तत्र रुद्र सूयरूपो भवो रस रूप शव क्षितिरूप ईशो वायुरूप । पशुपतिरग्नि रूप भीमो योमरूप महादेव सामरूप उग्र यजमान रूप तथा च—

नमस्त भगवान्रुद्र भास्करामिततेजमे ।
नमोभवाय देवाय रसायाम्बु मयाय च ॥१॥
शर्वायक्षितिरूपाय सदा सुरभिणे नम ।
ईशाय वायवे तुभ्य सस्पशाय नमो नम ॥२॥
पशूनापतय चव पावकायामिततेजस ।
भीमाय,व्योमरूपाय शब्दमात्राय ते नम ॥३॥
महादेवाय सोमाय अमृताय नमोस्तुत ।
उग्राय यजमानाय, नमस्त कमयोगिन ॥४॥[4]

१८ शिव-भुजगमस्तोत्रम

भुजगप्रयातछन्दोभिश्छन्द त्वादत्रशिवस्य वर्णनाच्चद नाम । अन्ते पुष्पिकायामपि ।

इति श्री मत्परमहसपरिव्राजका चायस्यश्री गोविन्द भगवत्पूज्यपा

---

१ लिंगपुराण प १
२ तत्रव १।६३।२८
३ तत्रव १।४१।३ ३४
४ लिंगपुराण १।४१।२६ ३२

शिष्यस्य श्रीमच्छकर भगवत क्ती शिवभुजगम् ।[1]

आचाय शकर प्रणीतमिद श्लोकाश्च ४० । शकरग्रन्थावल्याम यत्र च सकलन स्तोत्र ग्रथेपु वृहत्स्तोत्ररत्नाकरादिपु सकलितमिदम ।

स्तोत्रस्यास्य पाठेन नरो भक्तिमासाद्य सुपुत्रायुराराम्यश्वर्यादि प्राप्नोति । तथा चात्रव—

अनेन स्तवेनादरादम्बिकेशम् ।
परामक्तिमासाद्य य ये नमन्ति ।
मृता निभयास्ते जनास्तभज ते ।
हृदम्भोजमध्ये सदासीनमीशम ॥१॥

भुजगप्रियाकल्प शम्भो मयवम्, भुजगप्रयातेन वत्तेन क्लप्तम ।
नर स्तोत्रमेत्पठित्वोरभक्त्या सुपुत्रायुरारोग्यैश्वयमति ॥२॥[2]

भगवत शकरस्य स्तोत्रे सहजसम्माव्यमधुरिमोदगारयुतमिद भाषाया सारल्य भाव सौष्ठव हृदयानावजयति । सगीतमस्या शल्या कठिनहृदया अपि मुग्धा भवन्ति । सानुप्रास सप्रसादम । सरसम । स्वरूपम विरूपाक्षविश्वेश -विश्वादिदेव, त्रयीमूलशम्भोशिवनयम्बकत्व प्रसीदस्मरत्राहि पश्याव मुक्त्यै, क्षमा प्राप्नुहि त्र्यक्ष मारक्ष पापात ।"[3]

## १६ शिवमहास्तोत्रम्

भगवत शिवस्य महद्रूपेण स्तोत्रमतस्तदेव नाम । पुष्पिकाया चेदमेव नाम । तथा च—

'इति श्री शिव-महापुराणे सप्तम्या वायवीय सहिताया मुत्तर भागे शिव महास्तोत्रवणन नामकत्रिंशोऽध्याय ।[4] आदावपि शिव महास्तोत्रम् ।'[5]

शिवमहापुराण वा० स उत्तरभागे ३१तमाऽध्याय १ म श्लोकमारभ्य १८६तम यावत । उपमयु-क्तम ।

महत् पुराण्यदमिद सर्वाभीष्टदम् । पाठेन श्रवणन च सव पाप विधूयनर शिवसायुज्य गच्छति । तथा च—

एतत्पुरायतम स्तोत्र शिवयोर्हृदयगमम् ।
सर्वाभीष्टप्रद साक्षाद्मुक्तिमुक्त्यैकसाधनम् ॥१॥
य इद कीतयेन्नित्य शृणुयाद्वा समाहित ।
सविधूयाशु पापानि, शिवसायुज्यमाप्नुयात ॥२॥

१ शकरग्रन्थावल्याम पृ० २८
२ शकरग्रन्थावल्याम्, ३६ तथा ४ श्लोका
३ तत्रव ८
४ शिवमहापुराण पृ १०६३
५ तत्रव १०८६

गोघ्नश्चैव कृतघ्नश्च वीरहाभ्रूणहापि वा।
शरणागत घाती च, मित्र विश्रम्भ घातक ॥३॥
दुष्टपाप-समाचारो मातृहापितृहापि वा।
स्तवेनानेन जप्तेन तत्तत्पापात्प्रमुच्यते ॥४॥[१]

स्तोत्रेऽत्रभगवत शंकरस्य नित्य चित्स्वरूपस्य महिमावर्णित शिवो वाचा मगोचरोनिरजनोस्तितथा च—

निरजननिराधार जयनिष्कारणोदयनिरन्तरपरानन्द जय निवृत्ति कारण।[२]

शिव कालातीत शम्बुद्बुदयवल सर्वनाम्नाय-तत्वज्ञोऽन्तेनिवगण नन्दीश्वरगणेनास्य दादीना चर्चा।[३]

## २० शिव महिम्न स्तोत्रम्

यतोऽत्रशिवस्य महिमा वर्णित। स्तोत्र साहित्ये परम प्रसिद्धमिदम। श्लोका ४०। ' महिम्नस्तवपाठस्य।[४]

श्रीपुष्पदन्ताचार्य रचितमेतत्स्तोत्रमस्य पाठेन शिवलोकप्राप्तिस्तथा च—

सुरवरमुनिपूज्य स्वर्ग-मोक्षैकहेतु
पठति यदि मनुष्य प्राजलिर्नान्यचेता।
व्रजति शिव समीप किन्नर स्तूयमान,
स्तवनमिदममोघ पुष्पद तप्रणीतम् ॥१॥
श्री पुष्पदन्तमुख-पंकज निर्गतेन
स्तोत्रेण किल्विषहरेण हरप्रियेण।
कण्ठ स्थितेन पठितेन समाहितेन।
सुप्रीणितो भवति भूतपतिमहेश ॥२॥[५]

शिखरिणीछन्दोबद्धऽस्मादौ तर्क ईश्वर सिद्धिकरणम्। भजमानोलोका किमवयववतोऽपि जगतामिति[६] ततो विभिन्नप्रस्थानाना वैविध्य[७] विविध पौराणिक प्रसगानामुल्लेख। तेन च शिवस्य महिमा वर्णित। नीलकण्ठत्वेहेतुत्वम्। दक्ष-यज्ञविनाशन लिंगपूजने प्रवत्ति कामविनाशादय ग्रन्ते च शिवस्य ब्रह्मत्व

---

१ शिवमहापुराण ३१।१८१ १८२ १८३ १७४
२ तत्रैव ३१।५
३ तत्रव ३१ ३६ ६३ ६४ ६५
४ शिवमहिम्नस्तोत्रे ३६
५ शिवमहिम्नस्तोत्रे, ३८ ३६
६ तत्रव ६
७ तत्रैव ६ ६

मष्टमूर्तीना निर्देश । वृत ।

त्वमर्कस्त्व सोमस्त्वमसि पवनस्त्व हुतवह,
त्वमापस्त्व व्योम त्वमु धरणिरात्मात्वमिति च ।
परिच्छिन्नामेवत्वयि परिणता, विभ्रति गिर
नविदमस्तत्तत्त्व वयमिह तु यत्त्व न भवसि ॥१॥
भव शर्वोरुद्र पशुपतिरथोग्र सहमान्,
तथा भीमेशानाविति यदभिधानाष्टकमिदम ।
अमुष्मिप्रत्येक प्रविचरति देव श्रुतिरपि
प्रियायास्मैधाम्नेप्रविहितनमस्योऽस्मिभवते ॥२॥[१]

## २१ शिवमानसपूजास्तोत्रम्

यतोऽत्रबाह्योपचार धूपदीपनवेद्यादिभिविना पूजोक्ताऽतस्तेदव नाम । पुस्तके वेदमेवनाम ।[२]

परमहस-परिव्राजकाचार्य-श्री कृष्णानन्द सरस्वती रचितम बृहत्स्तोत्र-रत्नाकरयोधृतम । श्लोका २३ ।

य कश्चिदपि यत्र कुत्रचिदिद पठति सोऽस्य प्रभावेण शिवमयो भूत्वा मुक्तोभूतले चरति तथा च तत्रव—

इमा पूजा प्रतिदिन य पठेद यत्र कुत्रचित ।
सद्य शिवमयोभूत्वा, मुक्तश्चरतिभूतले ॥१॥[३]

मनुष्टुब्छदोबद्धेऽत्रस्तोत्रे मानसीवत्तीना बाह्य पूजनोपकरणेषु कथन यथा पूजन आवाहनासनसकल्पपाद्यार्घ्याचमनीयधूपदीपनवेद्यादी युपकल्पनी-यानि भवन्ति । तदवदत्र पूजने गुरुवाक्येषु विश्वासकामना-त्यागादिभावनाना मन्तव त्यात्मकाना आवश्यकता । प्रीतिरेव नवेद्यम । तथा च—

सवत्र प्रीतिजनक, नवद्य विनिवदये ।
जलात्मकत्वबुद्धिस्तु पीयूष तेऽपयेविभो ॥१॥[४]

वस्तुतोजगदब धने मुख्य-कारण दुर्वासना । तदधीनत्वे मुखादि शुद्धि कारणभतस्तदेव समपयति कवि ताम्बूलत्वेन श्रुति-सम्मतादक्षिणा वाचा विसजनम् ।

---

१ तत्रव २६ २८
२ बृहत्स्तोत्ररत्नाकरयो तथा स्तोत्ररत्नावल्याम् ।
३ बृहत्स्तोत्ररत्नाकरयो श्लोक २३
४ तत्रैव, श्लोक ८

दुर्वासना-परित्यागस्ताम्बूलस्य विसर्जनम् ।
वाचा विसर्जनदेव दक्षिणाश्रुतिसम्मता ॥१॥[१]

एव चाशाद्वैतभावना-परिपाको विशेषेण।

## २२ शिवसहस्रनामस्तोत्रम्

अत्र भगवत शिवस्य नाम्ना सहस्रस्य कथनमितितदेव नाम।[२] नाम्नामष्टाधिकमिति तत्रव नाम्नामष्टसहस्रेण स्तुतवान्वृषभध्वजमिति ॥[३]

स्तोत्रस्यास्य फलन्तु विस्तरशस्तत्र प्रतिपादित २८७ तम श्लोकमारभ्य ३२१ तम यावत्। असाध्य-कार्याणि चापि स्तोत्र पाठमात्रेण सिद्ध्यन्ति। भ्रूणहा ब्रह्महा गोघ्न पितृहा घाती, स्तेयी सर्वोऽपि पापात विमुक्तो भवति। वश्या स्त्रिय शूद्रा सर्वेऽत्राधिकारिण। तथा च—

सव-कर्मसु युक्तो वा युक्तो वा सव-पातक।
पठन्भक्त स्तोत्र सवपाप प्रमुच्यत ॥१॥
अथतत्परमगुह्य यऽपि स्यु पापकारिण।
वश्या स्त्रियस्तथा शूद्रा रुद्रलोकमवाप्नुयु ॥२॥[४]

वायुपुराण ३० तमऽध्याये १८१ तम श्लोकमारभ्य ३२१ तम श्लोक यावत्।[५] स्तोत्रकर्ता दक्ष। स च स्वयज्ञे विनष्टे श्लाघमुपत्य शिव तुष्टाव।

सरले सानुप्रासऽनुष्टब्छन्दोबद्धऽत्र स्तोत्रे शिवस्य नाम्ना सहस्र तत्र कानि चिदन्यत्रानुपलभ्यान्यपिनामानि। प्राय यौगिक गुणात्मकानि च नामानि सन्त्यत्र। तपोदान-यज्ञ-यागादि वाचका शब्दा अपि शिव नामत्वेन निर्दिष्टा। पौराणिकी नाम गणनात्मिका भाषा। सुबोधमिद पठनमात्रेण अर्थबोधजनकमिति।

## २३ शिवसहस्रनामस्तोत्रम्

यतोऽत्र शिवस्य सहस्रनाम्ना वणनम्। सूच्यामिदमेवनामोपक्रमे च[६] 'देव नाम्ना सहस्रेण भवादयन तथा श्रमम्'[७] फलकथने च जपेन्नाम्ना सहस्र च स याति परमा गतिम।[८]

---

१ तत्रव श्लोक १०
२ वायुपुराणे पृ० ६५
३ तत्रव ३०।१८१
४ वायुपुराणे ३।३१७ ३२०
५ तत्रव १०१
६ लिंगपुराण, पृ० १
७ तत्रव १।६८।२४
८ तत्रव १।६८।१६५

लिग पुराणे ९८ तमेऽध्याये २७ तम श्लोक मारम्य १९५ तम यावत। श्लोका १६९। स्तोत्रकर्ता विष्णु।

य इद स्तोत्र पठति स प्रतिनाम स्वणदानस्य फल प्राप्नोति। घृतकुल्या कलशस्नानैरश्वमेधसहस्र यज्ञ-सहस्रं वा यत्फल प्राप्नोति तत्फलमस्य स्तोत्रस्य पाठेन भवति। तथा च—

य पठेच्छृणयाद्वापि, श्रावयेद्वा द्विजोत्तमान्।
प्रतिनाम्नि हिरण्यस्य, दत्तस्य फलमाप्नुयात ॥१॥
अश्वमेध सहस्रेण फल भवति तस्य वै।
घृताद्य स्नापयद्रुद्र स्थाल्या च कलश शुभ ॥२॥
नाम्नासहस्रेणानेन श्रद्धया शिवमीश्वरम।
सोऽपि यज्ञसहस्रस्य, फल लब्धा सुरेश्वर ॥[१]

जपेन्नाम सहस्र च स याति परमागतिम्। अनुष्टुप छन्दोभि शिवस्य भगवतो नाम्ना कथनम यथा ज्ञानगम्य, दुष्प्रज प्रणवात्मक उन्मत्तवेष, सूय तापन, श्मशाननिलय श्मशानस्थ गुणात्मकानामेव नाम्नामत्र प्राचुयम। पौराणिकी सुबोध्या सरला भाषा।[२]

## २४ शिवसहस्रनाम स्तोत्रम्

यतोऽत्र शिवस्य सहस्रनामानि, पुस्तके धर्तमिद नाम।[३] उपक्रमे च 'ततो नाम्ना सहस्रेण तुष्टाव परमेश्वरम।[४]

सौर-पुराणे ३४ तमेऽध्याय १२ शश्लोक्त १६२ तम यावत्। श्लोक सख्या १५१। स्तोत्र-कर्ताविष्णु जाल धरवधापक्रम।

फलकथन च १५८ तमत १६२ तम यावत श्लोक पचसु। स्तोत्रस्यास्य पाठन सवविद्या प्राप्तिपूवकमश्वमेधसहस्रफल न दुलभम। प्रसन्न शिवोऽखिलान्-कामान्प्रयच्छति। तथा च—

नाम्नासहस्र यत दिव्य विष्णुना समुदीरितम।
य पठेच्छृणुयाद्वापि सव-पाप प्रमुच्यते ॥१॥
अश्वमेध सहस्रस्य, फल प्राप्नोति निश्चितम्।
पठत सव भावेन, विद्या वा महती भवेत ॥२॥

---

१ लिंगपुराण ९।९८।९९० ९१ ९२ ९५
२ तत्रैव समग्र-स्तोत्रे
३ सौरपुराण सूच्याम पृ १
४ तत्रव ३४।१०

तस्मान्नाम्नासहस्रेण, स्तोतव्योभगवान् शिव ।
प्रयच्छत्यखिलान्कामान, देहान्ते परमागतिम् ॥३॥[1]

सरले सानुप्रासेऽनुष्टुब्छन्दोवद्धेऽत्र शिवस्य सहस्रनाम्ना कीर्तनम् । तत्र पादावेक शब्दात्मकसमास-हीन-नाम्ना कथन ततः सामासिकानि । तथा च—

भव शिव हर रुद्र, पुष्कलो मुदगलोचन ।
अग्रगण्य सदाचार, सर्व शम्भुमहेश्वर ॥१॥[2]

पौराणिकी सुबोधाभाषा । क्वचिच्छब्दाना पुनरावृत्तिरपि दृश्यतेऽन्य-देववाचका शब्दा अपि सहस्र-नाम्न परम्परा सर्वदेवाना । शिवस्य विभिन्न-पुराणेषु कानिचिदत्रैव ।

## २५ शिवसहस्रनाम-स्तोत्रम्

भगवत शिवस्य नाम्ना सहस्र-वर्णन फलकथन-पुरस्सरमिति तदेव नाम । पुष्पिकाया चापि तथा च तत्रैव—

इति श्री शिवमहा-पुराणे चतुर्थ्यां कोटिरुद्रसहितायां शिव-सहस्रनाम वर्णन नाम पञ्चत्रिंशोऽध्याय ।[3]

शिवमहापुराणे कोटि रुद्र सहितायां ३५ तमाध्याये २य श्लोकमारभ्य १३३ तम श्लोक यावत् । श्लोका १३४ स्तोत्र-कर्ता विष्णु ।

स्तोत्रस्यास्य फल-कथन ३६ तमाध्याये । अस्य स्तोत्रस्य पठनेन पाठनेन श्रवणेन च स्वप्नेऽपि नर दु खी न भवति । राजसकटे शतावृत्ति कार्येद स्तोत्र रोगघ्नम् विद्या धनादि प्रद स्तोत्रस्यास्य भावेन विष्णु शवराच्चक्र लब्धवानिति तथा च—

अन्ये च ये पठिष्यन्ति, पाठयिष्यन्ति च नित्यश ।
तेषा दु ख न स्वप्नेऽपि जायते नात्र सशय ॥१॥
राज्ञा च सकटे प्राप्ते, शतावर्त्तीश्वरेसदा ।
साग च विधि सयुक्त, कल्याण लभते नर ॥२॥
रोगनाशकर ह्येतत्, विद्यावित्तदमुत्तमम् ।
सर्वकामप्रदपुण्य, शिवभक्ति प्रद सदा ॥३॥
यदुद्दिश्य फल श्रेष्ठ, पठिष्यन्ति नरास्त्विह ।
पठेत्समक्ष व नित्य, तस्य सिद्धिर्नसशय ॥४॥[4]

स्तोत्रेऽस्मिन प्रायश शिवस्य प्रसिद्धान्येव नामानि सन्ति असमस्तानि च

---

१ सौरपुराणे सूच्याम् ३४।१५८ १६६, १६२
२ तत्रैव ३४।१२
३ शिवमहापुराणे पृ० ७२२
४ शिवमहापुराणे ४।३६।२१ २२,२३,२४

तानि। क्वचित्समस्तान्यपि। क्वचिच्चाप्रसिद्धानि यथा आर्यगम्य चिरन्तन[1] तमोहर लोकसारग[1] कमण्डलुधर[3] गुरदो[4] मघवा[5] आदित्य[6] क्षेत्रज्ञ[7] क्षेत्र पालक निर्व्याजो[8] व्याज मदनादीनि।[9]

## २६ शिवस्तवराज

स्तवस्यास्यान्यस्तवापेक्षया प्रधानत्वादिदनाम। स्तवाना राजेति व्युत्प त्याऽस्यप्राधान्यम् सिद्धयति। सूच्यामिदमेव नाम।[10]

लिंग पुराणे १०४ थेऽध्याय ७म श्लोकमारभ्य २६ तम यावत। श्लोक सख्या २३। स्तोत्र-कर्तारो देवा इति।

यो नर इम स्तव पठति पाठयति शृणोति श्रावयतिवा स सव पाप विमुक्त परमागति याति। तथा च—

पठति स्तव भक्त्या, शक्राग्नि प्रमुख सुर।
कथित श्रावयेदविद्वान, स याति परमागतिम ॥१॥[11]

सरल सानुप्रास सगीतशल्या विराजितमिद स्तोत्र चतुर्थ्यन्त नामभि नम पदयुक्त कीर्तने कामपिनवामान दतति यच्छति। अत्र भगवत शिवस्य कतिपयगुणवाचकनामभि सस्तवो यत्र तदीय-पराक्रमादिवर्णनमपि प्रसगत समायाति। सरला सुबोधासानुप्रासा सप्रसादा भाषा।[12]

## २७ शिवस्तोत्रम्

शिवस्य स्तोत्रत्वादिदम् नाम करुणाभ्युदयमस्यापर नाम। तथा च 'करुणाभ्युदय नाम स्तोत्रमिद।[13]

मत्स्य-पुराणे १६२ तमेऽध्याये ३६ तम श्लोकमारभ्य ४७ तम यावत।

---

१ तत्रव ३५।७
२ तत्रव ३५।२४
३ तत्रैव ३५।४१
४ तत्रव ३५।५१
५ तत्रैव ३५।५६
६ तत्रव ३५।६८
७ तत्रव ३५।८३
८ तत्रैव ३५।११४
६ तत्रैव ३५।१३
१० लिंगपुराणे (वे० प्र० बम्बई) १८६३ ई० पृ० १
११ लिंगपुराणे (वे० प्रे० बम्बई) १।१०४।२६
१२ तत्रैव १।१०४।१ २६।
१३ मत्स्यपुराणे १६२।४७ मनसुखराय मोर क्लाइव रोड कलकत्ता २०११

स्तोत्रकर्ता भृगु । नर्मदातीरे स्व प्रतिमगवन्त शिव क्रुद्धदृष्टवाऽते तुष्टाव ।

स्तोत्रस्यास्य पाठेन शिवस्तुष्यति । जीवनरक्षा च भवति । तथा च—

करुणाभ्युदय नाम स्तोत्रमिद सर्वसिद्धिद दिव्यम ।
य पठति भवित-युक्त,स्तस्य तुष्येद भगोयथा ॥१॥[४]

स्तोत्रेऽस्मिनमहादेवस्य मगवता महिमान वर्णयितु न कोऽपि समर्थ । सकल जगतामीश्वरस्तु शिव एव मगवन्त शिवमक्त्यैव तोषितु समर्थोनर । यमनियम योग-ध्यानादयइमतोपयितु नाल नवा भक्त्यातुल्या । जगत सृष्टयादि कर्मकर्तु रज सत्वतमासि समवेत्यविरचिविष्णुहरेति सना भजते । तथा च

भवातीतभुवनपतेप्रभो त्वा तु विज्ञापये किंचित ।
त्वदगुणनिकरान्वक्तु क शक्तोभवति मानुषोनाम ॥१॥
सत्वरजस्तमस्त्व स्थित्युत्पत्योर्विनाशने देव ।
त्वामुक्त्वा भुवनपत भुवनेश्वर नवक्षवत किंचित् ॥२॥
यम नियम यज्ञ दानवेदाभ्यासाश्च धारणायोगा ।
त्वदभक्ते सर्वमिद नार्हति हि कलासदृशम् ॥३॥[१]

सरला भाषा, सगीतमयी, प्रशस्या वर्णाशयया मनोरमा पद चातुरी ।

## २८ शिवस्तोत्रम्

यतोऽत्र शिवस्य मगवत कीर्तनमतस्तदेवनाम फलकथने चास्य नाम्नो निर्देश तथा च—

इद स्तोत्र महापुण्य पठेदभक्त्याच योनर ।[3]

ब्रह्मवर्ते १मे खण्डे १९तमेऽध्याय ५९तम श्लोकमारम्य १६ तम श्लोक यावत । श्लोका २४ । बाणासुरस्चात्र स्तोत्र-कर्ता । पुरा वसिष्ठेनगन्धर्वाय दत्तम ।

स्तोत्रस्यास्य पाठन नर सर्वसिद्धि लभते । अपुत्र पुत्र, रोगी नीरोगता बद्धोबन्धन मुक्ति भ्रष्टराज्य राज्य, निधनोऽवल परमश्वय, पत्नीहीन पत्नी च लमते । तथा च तत्रव—

इद स्तोत्र महत्पुराय, पठेत भक्त्या च यो नर ।
स्नातस्य सर्वतीर्थाना फल प्राप्नोति निश्चितम ॥१॥
अपुत्रो लभते पुत्र, वर्षमेक शृणोति य ।
अवश्य मुच्यते रोगात व्यासवाक्यमितिश्रुतम ॥२॥

---

४ तत्रव १९२।४७

१ मत्स्यपुराणे १९२।३९ ३७ ३९ ४०

२ ब्रह्मवर्ते १।१९।६७

— कारागारेऽपि बद्धो य, नैवप्राप्नोति निर्वृतिम ।
स्तोत्रं श्रुत्वा मासमेकं, मुच्यतेव धनातध्रुवम ॥३॥
भ्रष्टराज्यो लभेद्राज्य भक्त्या मास शृणोति य ।
मासश्रुत्वा सयतश्च, लभेद भ्रष्टधनो धनम ॥४॥
इहलोके सुख भुक्त्वा, कृत्वा कीर्ति सुदुर्लभाम् ।
नाना प्रकार धर्म च, यात्यन्ते शङ्करालयम ॥५॥[1]

सरले सानुप्रासे स्तावेऽत्र भगवत शङ्करस्य दयालुतामुपवर्ण्य तस्य स्वरूप नानाविध वर्णयामास । पौराणिकी प्रवाहमयी भाषा सगीतमयी शैली ।

## २६ शिवानन्दलहरी

परम प्रसिद्धमिद स्तोत्रमाचार्यपादरेवास्यद नाम धृतम । पुष्पिकायां च—

"इति श्रीमत्परम हस-परिव्राजकाचार्यस्य श्री गोविन्द भगवत्पूज्यपाद-शिष्यस्य श्रीमच्छङ्करभगवत कृतौ शिवानन्दलहरी सम्पूर्णा । [2]

अद्वैतमत प्रवर्तकाचार्य भगवत्पाद श्रीशङ्करकृतमत्र श्लोकाना शतकम् ।

स्तोत्रस्यास्य पाठेन समस्तस्तोत्र पाठस्य फल धायतुपस्तोमवत । तथा च—

— स्तोत्रेणालमह वच्मि, मृषा देवा विरञ्च्यादय ।
स्तुत्याना गणनाप्रसग-समये त्वामग्रगण्य विदु ।
माहात्म्याग्रविचारणप्रकरणे, धायतुप-स्तामवत ।
भूतास्त्वा विदुरुत्तमोत्तमफल शम्भो भवत्सेवना ॥[3]

अत्रादौ स्वरूप प्रतिपादन-पुरस्सर भगवत शम्भो चरणयो स्वचेत समर्पण प्राथना । स्व पशुरूपेण मत्वा पशुपत शिवस्य चरणयो समर्पणम । शिवचरणमेव शान्ति साधनम तथा च—

घटो वा मृत्पिण्डोऽप्यणुरपि च धूमोऽग्निरचल ।
पटोवातन्तुर्वा परिहरति किं घोर-शमनम ।
वथा कण्ठक्षोभ वहसि तरसा तर्क-वचसा ।
पदाम्भोज शम्भोर्भज-परम-सौख्य व्रज सुधी ॥१॥[4]

अत्र भगवा भट्टादवो ब्रह्म विष्णवादीना कारकत्वेन कथित स च श्रीडम्नवात्मक लीला विधत्ते सानुप्रास सप्रसाद सुललित दीर्घसमास धारा-

---

१ ब्रह्मवैवर्त ५।१६।६७ ७१ तथा ७८
२ शङ्करग्रन्थावल्याम् पृष्ठे ११ सम्पटक द्वितीय सस्करण प० ३१
३ तत्रैव १०० श्लोक
४ शङ्करग्रन्थावल्यां श्लोक ६

प्रवाहित भक्तिभाव निर्झरझरितम्। क्वचिद् व्यास शैली क्वचिच्च समास शाली।

## ३० श्रीकृष्णकृत शिव स्तोत्रम्

श्रीकृष्णेन कृतत्वादस्य शिवस्तोत्रत्वाच्च तदेव नाम।[१]

हरिवंशपुराणे विष्णुपर्वणि ७४ तमऽध्याय २१ तम श्लोकमारभ्य ४० तम यावत। श्लोकसंख्या २०। स्तोत्रकर्ताभगवान् कृष्ण। रैवतके, तप कृत्वा स्तोत्र चकार।

स्तोत्रस्यास्य भक्त्या करणेन नर धर्मभाक् भवति। समरे च जय प्राप्नोति।

यश्च स्तवेन मा भक्त्या स्तोष्यतेऽमरसत्तम।
त्वया कृतेनधर्मज्ञ, धर्मभाक् स भविष्यति ॥१॥
समरे च जय विष्णो, प्राप्य पूजा तथोत्तमाम्।[२]

स्तोत्रेऽत्रादौ रुद्र शब्दार्थं कथितस्तत पर शिवस्य कतिपय-नाम्ना व्युत्पत्ति-मूलकोऽर्थ तथा च—

रुद्रोदेवस्त्व रुदनाद द्रावणाच्च, रोरुयमाण द्रावणाच्चातिदेव।
भक्त भक्तानां वत्सल वत्सलाना, कीर्त्या युक्तस्त्वे त्व प्रभवाम्यन्तरेण ॥१॥[३]

भगवान् रुद्र पशूना पति जगत्पतिमहतामीश सर्वजगदव्यक्तादस्मा उज्जायते। भवति जगदस्मादत एवाय भव इत्युदीरित।

भूत यस्माज्जगदत्यन्तघोर त्वत्तो व्यक्ताक्षराक्षरञ्च।
तस्मात्त्वामाहुर्भव इत्येवभूत, सर्वेश्वराणा महतामप्युदारम् ॥[४]

## ३१ हिमालय कृत शिवस्तोत्रम्

हिमालयेन कृतत्वात्तदेव नाम। सूच्यामपीद नाम।[५]

ब्रह्मवैवर्ते ४थ खण्ड ३८ तमऽध्याये ६५तम श्लोकमारभ्य ७१तम यावत। श्लोका १६। स्तोत्र कर्ता हिमालय। पार्वत्या अन्तर्धानान्तर हिमालय अक्षयवटान्तिकमुपेत्य शिव तुष्टाव।

यश्चनर इद स्तोत्र नित्य पठेत स सर्वपापेभ्य विमुक्तो भवति। मास

---

१ हरिवंशे पृ० ३४०
२ तत्रैव २।७४।२६ ३०
३ हरिवंशे २।७४।२२
४ तत्रैव २।७४।२५
५ ब्रह्मवैवर्ते, पृ० १

मक पठनेन पुत्र-पौत्रादिक लभते। भार्या-हीनश्च भार्या लभते। राज्यभ्रष्टश्च राज्यम् तथा च—

स्तोत्रमेतन्महापुराय निसन्ध्य य पठेन्नर ।
मुच्यते सर्वपापेभ्यो, भयभ्यस्च भवार्णवात् ॥१॥
अपुत्रो लभते पुत्र, मासमेक पठेद यदि ।
भार्याहीनो लभेद् भार्या सुशीला सुमनोहराम् ॥२॥
चिरकालगत वस्तु, लभते सहसा ध्रुवम् ।
राज्यभ्रष्टो लभेद्राज्य, शंकरस्य प्रसादत ॥३॥
कारागारे श्मशाने, च शत्रु-ग्रस्तेऽति सङ्कटे ।
गम्भीरेऽतिजलाकीर्णे, भग्नपात विपादने ॥४॥
रणमध्यमहाभीताहिंस्रजन्तुसमन्विते ।
सर्वतोमुच्यते स्तुत्वा शंकरस्य प्रसादत ॥५॥[1]

स्तोत्रेऽस्मिन शिव सर्गास्थिति प्रत्यवहार-हेतुरक्त प्रकृति प्रकृतीशश्च निर्गुण प्रकृते पर । नानारूपो विधाता महेश्वरोमृत्युञ्जय । वेद-वर्ता चेति ।[2]

## (ग) सामान्य-स्तोत्राणि—(१५१)

१ अगस्त्य-कृत शिवस्तोत्रम श्लोका ८। स्कान्दे ३।१३।२२।३०। दुःख नाशम् ।
२ अगस्त्याष्टकम् श्लोका ८। स्तोत्रार्णव ८८। मृत्युभय निवारणम ।
३ अगस्त्यगलिंगाष्टकम्। श्लोका ६। स्तोत्रार्णवेपृष्ठे - १०५। रचयिता चास्य शोभराज-कुलसुत्त्वय नामाङ्कती। विमुक्तिदम ।
४ अघोरस्तव । श्लोका ४५। स्तोत्रार्णव पृष्ठे १४। त्रिसन्ध्य पठनेन शत्रुनाश ।
५ अन्धककृतशिवस्तोत्रम् श्लोका ८। पद्मपुराण १।४८।७४ ८२। कल्याणकरम् ।
६ अमोघशिवकवचम्। श्लोका ३३। स्कान्दे ३।१२।१ ३३। (गीताप्रेस, गोरखपुरत) सर्वबाधा प्रशमनम। आयुरारोग्यदम्।
७ अर्द्धनारीश्वराष्टकम् श्लोका ६ उपमन्युकृत शिवलोकप्रम। वा० वि० वं० १३६८।
८ अरुणाचलस्तोत्रम् श्लोका १३। स्तोत्रार्णव पृ० ७४। धर्माय-कामदम् भूतप्रेतबाधा-शान्तिकरम् ।

---

१ ब्रह्मवैवर्ते ४।३८।७४-७८
२. तत्रैव ४।३८।६६-७२

९ अरुणाचलाष्टकम्, श्लोका ११। स्तोत्रार्णवे पृ० ७४। सम्पत्करम्।
१० अष्टप्रासाष्टकम् श्लोका ६। स्तोत्रार्णवे पृ० १०३। इष्ट-सिद्धिदम्।
११ असित-कृत शिवस्तोत्रम् श्लोका १०। ब्र० वै० श्रीकृ० जन्मखण्डे। इहसुखदमन्तशिव-लोकम्। बृहत्स्तोत्र रत्नाकरयो।
१२ उपमन्यु कृत शिवस्तोत्र, श्लोका २०। बृहत्स्तोत्ररत्नाकरयो शिवलोकदम्।
१३ उमामहेश्वरस्तोत्रम् श्लोका १३। आचार्य शंकर-कृतम्। सर्व सौभाग्यदम्।
१४ एकादशमुखहनुमत्कवच, श्लोका २७। अगस्त्यसंहितातो बृहत्स्तोत्र रत्नाकरे धृतम्। पृ० २२७। आयुष्यदम्।
१५ ओंकारेश्वरस्तोत्रम्। श्लोका ४६। स्कान्दे ४।७३।१०० १४६। सर्व-दुःखनिवृत्तिपूर्वक धन धान्यदम्।
१६ कल्किकृत शिवस्तोत्रम् श्लोका ७। बृहत्स्तोत्र रत्नाकरे काशी-संस्करणे कल्किपुराणत दुर्भिक्षारिष्टनिवारकम्।
१७ कालभैरवाष्टकम् श्लोका ९। आचार्य शंकर कृतम् शंकर-ग्रन्थावल्याम् बृहत्स्तोत्ररत्नाकरे च। भुक्ति मुक्ति-दायकम्।
१८ कालहस्तीश्वराष्टकम्, श्लोका ८। स्तोत्रार्णवे ११६ पृ०, सुख शान्तिदम्।
१९ कालहस्तीश्वराष्टकम् श्लोका ६। स्तोत्रार्णवे ११७। शिव लोकदम्।
२० गिरीशाष्टकं, श्लोका ६। स्तोत्रार्णवे १८८ पृष्ठे, शिवलोकदम्।
२१ गुह्यक कृत शिवस्तोत्रम् श्लोका १८ स्कान्दे १।३४।३६ ५७। सर्वकामदम्।
२२ चन्द्रमौलिपञ्चरम् श्लोका ५। स्तोत्रार्णवे पृ० १२६। दुःखशान्तिकरम्।
२३ चन्द्रमौलिपञ्चकम् श्लोका १२८ स्तोत्रार्णवे १२८। शान्तिदम्।
२४ चन्द्रशेखराष्टकम् श्लोका १०। बृहत्स्तोत्ररत्नाकरयोधृत मार्कण्डेय पुराणत। अखिलार्थ सिद्धिदम्।
२५ चिदम्बरपञ्चचामरस्तोत्रम् श्लोका १० स्तोत्रार्णवे ११२ पृ०। लक्ष्मीदम्।
२६ नानामृतरसायनस्तोत्रम् श्लोका ४२। स्तोत्रार्णवे पृ० १३४। तापनीयम् कुल-कोटि समुद्धरण पूर्वकमोक्षदम्।
२७ ताण्डवस्तोत्रम् श्लोका २०। स्तोत्रार्णवे पृ० २०। इह लक्ष्मीदमन्ते शिवलोकदम्।
२८ त्रोटकस्तोत्रम् श्लोका ७। म० पु० १८७।६२ ६८। रक्षाकरम्।

२९ दक्षकृत शिव-स्तोत्रम, श्लोका २३ । पादमे १।५६।६८ ९० । मनोरथ-पूरकम ।

३० दारिद्रहनस्तोत्रम श्लोका ९ । वहृत्स्तोत्र रत्नाकरया । सवसम्पत्कर पुत्रपौत्रादिदम ।

३१ दशश्लोकीस्तोत्रम श्लोका १० । विद्याधर चक्रवर्तिरचितम स्तोत्रार्णवे १०७, शिवभक्तिदम ।

३२ नम शिवाष्टकम श्लोका ९ । स्तोत्रार्णवे प० ९३ । मनोरथपूरकम ।

३३ नम शिवाष्टकम श्लोका ८ । स्तोत्रार्णवे ९४ प० विजयदम ।

३४ नम शिवाय रत्नस्तोत्रम श्लोका ५५ रोगनिवृत्तिपूर्वक मुक्तिदम ।

३५ नमस्कार दशक-स्तोत्रम श्लोका ११ व्यासकृत स्तोत्रार्णव ८५ । सवकामदम ।

३६ निर्वाणषटकम् श्लोका ६ । आचार्यशंकरकृतम ज्ञानदम ।

३७ पंचाक्षरास्तव श्लोका ८, स्तोत्रार्णवे ५०६ । भुक्तिमुक्तिद ।

३८ पंचमुख हनुमत्कवच, श्लोका ११ । वहत्स्तोत्र रत्नाकरयो काशी संस्करणे, प० २२६ । सुदर्शनसहितात त्रलोक्य विजयदम ।

३९ पशुकृत शिवस्तोत्रम श्लोका ब्रह्मवैवर्ते ३।२६।४३ ५६ । सुखदम ।

४० पशुपत्यष्टकम, श्लोका ८ । वहत्स्तोत्ररत्नाकरे स्तोत्रावल्या, स्तोत्रार्णवे च पर्वतीपत्ति-सूरि रचितम । शिवलोकदम ।

४१ पार्थिवेश्वर-कवचम् उत्तर भरबीत त्रते वाराणसी । स० विश्वविद्यालये पु० स० २२८१० । सर्वेष्टदम ।

४२ पार्थिव शिवकवचम् वा० स० वि० वि० २३९९६ । विश्वासारतन्त्रत । सुखदम ।

४३ प्रदोपस्तोत्रम श्लोका ७ । स्कान्दे ब्रा० ब्रह्मोत्तरखण्डे ७।५६,६६ वहृत्स्तोत्र रत्नाकरयो दारिद्रयादिनाशकम ।

४४ प्रदोप स्तोत्राष्टकम् श्लोका ६ । स्कान्दे ३।६।७३।८१ । वहृत्स्तोत्र रत्नाकरयो दारिद्रय नाशकम् ।

४५ ब्रह्मादि देव-कृत शिव-स्तोत्रम श्लोका २८ स्कान्दे १।१६।१ २८ । सव पापघ्नम् ।

४६ महादेवाष्टकम श्लोका ९ । श्री प० रघुनाथ-शर्मा विरचितम । वहृत्स्तोत्ररत्नाकरे काशी संस्करणे । विपदनाशकम् ।

४७ महामृत्युंजयस्तोत्रम श्लोका १५ । वहृत्स्तोत्ररत्नाकरे काशी-संस्करणे । अपमृत्युवारकम ।

४८ मातृ भूतेश्वरस्तोत्रम् श्लोका १४ । स्तोत्रार्णवे ८४ । श्री सुदर्शन पण्डित रचितम् । समस्तेष्टदम् ।

९ अरुणाचलाष्टकम्, श्लोका ११ । स्तोत्रार्णव पृ० ७४ । सम्पत्करम् ।
१० अष्टप्रासाष्टकम श्लोका ९ । स्तोत्रार्णवे पृ० १०३ । इष्ट सिद्धिदम् ।
११ असित-कृत शिवस्तोत्रम् श्लोका १० । ब्र० वै० श्रीकृ० जन्मखण्डे । इहसुखदमन्तेशिव-लोकदम् । बृहत्स्तोत्र रत्नाकरयो ।
१२ उपमन्यु कृत शिवस्तोत्र, श्लोका २० । बृहत्स्तोत्ररत्नाकरयो शिवलोकदम् ।
१३ उमामहेश्वरस्तोत्रम् श्लोका १३ । आचार्य शङ्कर-कृतम् । सर्व सौभाग्यदम् ।
१४ एकादशमुखहनुमत्कवच, श्लोका २७ । अगस्त्यसंहितातो बृहत्स्तोत्र-रत्नाकरे धृतम् । पृ० २२७ । आयुष्यदम् ।
१५ ओङ्कारेश्वरस्तोत्रम । श्लोका ५६ । स्कान्दे ४।७३।१०० १५६ । सर्व दु खनिवृत्तिपूर्वक धन धान्यदम् ।
१६ कल्किकृत शिवस्तोत्रम्, श्लोका ७ । बृहत्स्तोत्ररत्नाकर काशी-संस्करणे कल्किपुराणत दुर्भिक्षारिष्टनिवारकम् ।
१७ कालभैरवाष्टकम श्लोका ९ । आचार्य शङ्कर कृतम् शङ्कर-ग्रन्थावल्याम् बृहत्स्तोत्ररत्नाकरे च । भुक्ति मुक्ति-दायकम् ।
१८ कालहस्तीश्वराष्टकम्, श्लोका ८ । स्तोत्रार्णवे ११६ पृ०, सुख शान्तिदम ।
१९ कालहस्तीश्वराष्टकम श्लोका ९ । स्तोत्रार्णवे ११७ । शिव लोकदम् ।
२० गिरीशाष्टक श्लोका ९ । स्तोत्रार्णवे १८८ पृष्ठे, शिवलोकदम् ।
२१ गुहाख्य कृत शिवस्तोत्रम् श्लोका १८, स्कान्दे १।३४।३९ ५७ । सर्वकामदम् ।
२२ चन्द्रमौलिपञ्चकम् श्लोका ५ । स्तोत्रार्णवे पृ० १२९ । दुःखशान्तिकरम् ।
२३ चन्द्रमौलिपञ्चकम् श्लोका १२८ स्तोत्रार्णवे १२८ । शान्तिदम ।
२४ चन्द्रशेखराष्टकम श्लोका १० । बृहत्स्तोत्ररत्नाकरयोधृ त मार्कण्डेय पुराणत । अखिलार्थ सिद्धिदम ।
२५ चिदम्बरपञ्चचामरस्तोत्रम श्लोका १० स्तोत्रार्णवे ११२ पृ० । लक्ष्मीदम ।
२६ नानामृतरसायनस्तोत्रम श्लोका ४२ । स्तोत्रार्णवे पृ० १३४ । ताडपत्रीयम कुल-कोटि समुद्धरण पूर्वकमोक्षदम् ।
२७ ताण्डवस्तोत्रम् श्लोका २० । स्तोत्रार्णवे पृ० २० । इह लक्ष्मीदमन्ते शिवलोकदम् ।
२८ त्रोटकस्तोत्रम, श्लोका ७ । म० पु० १८७।६२ ६८ । रक्षाकरम् ।

२९ दक्षकृत शिव-स्तोत्रम, श्लोका २३ । पादमे ३।५६।६८ ९० । मनोरथ पूरकम ।
३० दारिद्रहनस्तोत्रम, श्लोका ९ । वहत्स्तोत्र रत्नाकरयो । सवसम्पत्कर पुत्रपौत्रादिदम् ।
३१ दशश्लोकीस्तोत्रम, श्लोका १० । विद्याधर चक्रवर्तिरचितम स्तोत्राणवे १०७, शिवभक्तिदम ।
३२ नम शिवाष्टकम श्लोका ६ । स्तोत्राणवे पृ० ६३ । मनोरथपूरकम ।
३३ नम शिवाष्टकम श्लोका ८ । स्तोत्राणवे ६४ प० विजयदम ।
३४ नम शिवाय रुगडास्तोत्रम श्लोका ४५ रोगनिवनिपूवक मुक्तिदम ।
३५ नमस्कार शिव-स्तोत्रम श्लोका ११, व्यासकृत स्तोत्राणवे ८५ । सवकामप्रम् ।
३६ निर्वाणषटकम्, श्लोका ६ । आचायशंकरकृतम ज्ञानदम ।
३७ पचाक्षरापस्तव श्लोका ८, स्तोत्राणवे ५०६ । भुक्तिमुक्तिद ।
३८ पचमुख हनुमत्कवच, श्लोका ११ । वहत्स्तोत्र रत्नाकरयो काशी सस्करणे, प० २२९ । सुदशनसहितात त्रलोक्य विजयदम ।
३९ पशुकृत शिवस्तोत्रम् श्लोका ब्रह्मववर्ते ३।२९।४३ ५६ । सुखदम ।
४० पशुपत्यष्टकम्, श्लोका ८ । वहत्स्तोत्ररत्नाकरे, स्तोत्रावल्या स्तोत्राणवे च पथवीपति-सूरि रचितम । शिवलोकदम ।
४१ पार्थिवश्वर-कवचम् उत्तर भरवीत त्रते वाराणसी । स० विश्वविद्यालय पु० स० २२८१० । सर्वेप्सदम् ।
४२ पार्थिव शिवकवचम भा० स० वि० वि० २३१६६ । शिवासारत त्रत । सुखदम ।
४३ प्रदोपस्तोत्रम, श्लोका ७ । स्कान्दे ब्रा० ब्रह्मोत्तरखण्डे ७।५६,६६ वहत्स्तोत्र रत्नाकरयो दारिद्रयादिनाशकम् ।
४४ प्रदोप-स्तोत्राष्टकम्, श्लोका ९ । स्कान्दे ३।६।७३।८१ । वहत्स्तोत्र रत्नाकरयो दारिद्रय नाशकम् ।
४५ ब्रह्मादि-देव-कृत शिव-स्तोत्रम, श्लोका २८ स्कान्दे १।१६।१ २८ । सव पापघ्नम् ।
४६ महादेवाष्टकम श्लोका ९ । श्री प० रघुनाथ शर्मा विरचितम् । वहत्स्तोत्ररत्नाकरे काशी सस्करणे । विपदनाशकम् ।
४७ महामृत्युजयस्तोत्रम् श्लोका १५ । वहत्स्तोत्ररत्नाकरे काशी-सस्करणे । अपमृत्युवारकम् ।
४८ मातृ भूतेश्वरस्तोत्रम् श्लोका १४ । स्तोत्राणव ८४ । श्री सुदशन पण्डित रचितम् । समस्तप्टदम् ।

४९ माहेश्वरस्तोत्रम् श्लोका २२।
(अ) मारतिस्तोत्रम् भक्तिद श्लोका १०, बृहत्स्तोत्ररत्नाकरे।
(ब) साम्बपुराणे १७।१ २२। सर्वेप्टदम्।
५० मुख्य शिवसहस्रनामस्तोत्रम् श्लोका ११०
शिवरहस्यत। वा० वि० वि० पु० स० १५७०। रुद्रयामलस्यकादशा ध्यायत। दु खघनम।
५१ मृत्युजय मूलम त्रस्तानम। श्लोका २१। देवीरहस्ये ४५।१ २१। महा पातकनाशनम।
५२ मृत्युजय सहस्रनाम स्तोत्रम श्लोका १३६। देवी रहस्ये ४४।१ १३६। शत्रुघनम।
५३ मृत्युजय कवचम श्लोका २३ देवीरहस्ये ४३।१ २३। दुर्भिक्षादि विनाशकम।
५४ मृत्युजयस्तोत्रम श्लोका १६। पादमउत्तरे २३७।७५ ६०। अपमृत्यु वारकम्।
५५ मृतसजीवनीस्तोत्रम श्लोका ३०। बहत्स्तोत्ररत्नाकरे काशी सस्करण २६१। वसिष्ठरचितम। दुर्भिक्षनाशकम।
५६ ५७ मुनिकृतशिवस्तोत्रम् श्लोका १६। लिंगपुराणे ३२।१ १६। सेना पतित्वदम।
५८ रतिकृतशिवस्तोत्रम। श्लोका १४ पाद्मे १।४५।२५७ २७०। सौभाग्यदम्।
५९ रामकृतशिवस्तोत्रम श्लोका २५। पादमे १।३३।१५१ १७७। रक्षा करम।
६० रामेश्वरस्तोत्रम श्लोका १७ पादमे १।४०।१३६ १५५। शत्रु विजयदम।
६१ रुद्राष्टकम श्लोका ८। तुलसीदास कृतम। रामायणे गीता प्रेस, गोरखपुर प० ६५८। शम्भुप्रीतिकरम।
६२ रुद्रस्तोत्रम्। श्लोका ६। स्कान्दे ४।१६।५५ ६०। सब सौख्यदम्।
६३ रुद्रस्तोत्रम श्लोका १०। दश, स्कान्दे ५।६।४६ ५५। कष्टहरम्।
६४ रुद्रस्तोत्रम श्लोका १०। देवीभागवते १०।४।३-१२। इष्टदम्।
६५ रुद्रहृदयम हि दुत्वेलिखित नचोपलभ्यते स्कान्दे।
६६ लिंग-पञ्च विंश स्तोत्रम श्लोका २५। स्तोत्रार्णवे प० १४८। जरा मृत्युभय निवतकम।
६७ लिंगाष्टकम श्लोका ९। बहत्स्तोत्र रत्नाकरयो। शिवलोकदम्।
६८ लिंगोदभव स्तोत्रम्। श्लोका ३९। वायु पु० ५५।३० ६८। सब काम

प्राप्तिपूर्वक पाप निवृत्ति फलम ।

६९ वाडवानलस्तोत्रम्, वा० वि० वि० पु० स० १७१३ । शत्रु विनाशकम ।

७० वाण-कृत शिवस्तोत्र, श्लोका १७, स्कान्दे ५।२८।८४-१०१ । दुःख निवारकम् ।

७१ वाण कृत शिव तोटक स्तोत्रम्, श्लोका ११ । पाद्मे ३।१५।५२ ६२ ।

७२ विल्वाष्टकम, श्लोका ९ । बृहत्स्तोत्र रत्नाकरे मोक्षप्रदम् ।

७३ विश्वनाथाष्टकम श्लोका १० । बृहत्स्तोत्र रत्नाकरयो । व्यास कृतम । शिवलोकदम ।

७४ विश्वनाथस्तव, श्लोका १० । श्री योगेश मिश्र रचितम । बृहत्स्तोत्र रत्नाकरे, काशी संस्करणे । समृद्धिद ।

७५ विश्व-मूर्त्यष्टकम् श्लोका ११ । बृहत्स्तोत्ररत्नाकरे, कलिकल्मषघनम ।

७६ विश्वेश्वर-मगलाष्टक, श्लोका ८ कदाचित स्कान्दे । मगलदम ।

७७ विष्णुकृत शिव-स्तोत्रम्, श्लोका २३ । स्कान्दे १।१४।८ २० । दुःखघ्नम् ।

७८ वीरेश्वरस्तोत्रम श्लोका २२ । बृहत्स्तोत्ररत्नाकरे काशी-संस्करणे । पुत्रदम् ।

७९ वीर भद्राष्टकम् श्लोका ९ । स्तोत्रार्णवे, पृ० ८७ । सुख-सम्पत्ति दायकम ।

८० वीर भद्र भुजग-स्तोत्रम् श्लोका १५ । स्तोत्रार्णव पृ० ८६ । विपद विनाशकम् ।

८१ वेद-सार शिवस्तव । श्लोका ११ । आचार्य शकर कृत बृहत्स्तोत्र रत्नाकरे काशीसंस्करणे, ज्ञानद ।

८२ वैद्यनाथाष्टकम श्लोका ८ । बृहत्स्तोत्ररत्नाकरे । श्री-गणेशनाथरचितम ज्ञानदम ।

८३ शकर-कवचम श्लोका ५५ । स्तोत्रार्णवे पृ० १२२ । सुखदम् ।

८४ शकर-स्तोत्रम श्लोका १० । श्री वासुदेव सरस्वती रचितम । बृहत्स्तोत्र रत्नाकरे पृ० २९८ । रक्षाकरम ।

८५ शकराष्टकम् श्लोका ९ । बृहत्स्तोत्ररत्नाकरयो श्री-ब्रह्मानन्द सरस्वती रचितम् शिवलोकदम् ।

८६ शरणागत स्तोत्रम्, श्लोका ८ । वा० वि० वि० पु० स० १६४२ । शरणदम् ।

८७ शरभकवचम्, श्लोका १२५ । आकाश भरवतन्त्रे ११८ाऽध्याये सर्व कामपूरकम । वा० वि० वि० पु० स० १६४५ ।

८८, शरभ-सहस्र नाम श्लोका १४४ । आकाशभैरव-तन्त्रे सर्वेष्टदम्

८६, शरभ सालुवकवचम् श्लोका ११६, आकाश भरवकल्पत वा० वि० वि० पु० स० १६४६। सवशान्तिकरम्।

९० शिव कवचम्। ब्र० ववतमहापुराण ३।३५।११३ १३६। अश्वमेध सहस्रफलदम्।

९१ शिव कवच-स्तोत्रम् श्लोका ४५। स्कान्दे ब्र० उ० खण्डे दु खनाशकम्।

९२ शिव कवचम् श्लोका ४२। स्कान्द ब्रह्मोत्तरखण्डे १२ अध्याय। बृहत्स्तोत्ररत्नाकरयोरस्यनाम शिवकवचस्तोत्रम्। वा० वि० पु० स १६५४ विजयदम्।

९३ शिवकवचस्तोत्रम् श्लोका ४५ दु खनाशकम् स्कान्दे ब्र० उ० खण्डे।

९४ शिव कवचम् श्लोका ३३। स्कान्दे ३।१२।१ ३३। सवकामदम्।

९५ शिवताण्डवस्तोत्रम् श्लोका १३। आचाय शकरकृतम् बृहत्स्तोत्र रत्नाकरयो। भक्तिदम्।

९६ शिवनाम-कल्पलता शिवस्य १०८ नामानि। स्कान्दे काशी खण्डे वा० वि० १६६६। अघविनाशिका।

९७ शिवनाम कल्पलता शिवस्य १०८ नामानि शिवरहस्यत दु खहर।

९८ शिवपञ्चामरस्तोत्रम् श्लोका ९। स्तोत्रार्णवे पृ० ७३। सुखदम्।

९९ शिवपञ्चाक्षरनानाममाला-स्तोत्रम् श्लोका २७। आचायशकर-कृतम् शकर ग्रन्थावल्याम् धतम् शिवसायुज्यदम्।

१०० शिवपञ्चाक्षर-स्तोत्रम् श्लोका ६। आचाय शकर रचितम्, बृहत्स्तोत्र रत्नाकरयो धतम् शिवलोकदम्।

१०१ शिवपादादिकेशान्त वर्णनम् श्लोका ४०। शकर ग्रन्थावल्या वा० वि० विद्यालय बृहत्स्तोत्ररत्नाकर च। सव-सम्पत्तिदम्।

१०२ शिवभुजग प्रयातस्तोत्रम् श्लोका ३०। वा० वि० वि० पुस्तक स० १६६८। महापण्डितकृतम्। रक्षाकरम्।

१०३ शिव महिम्नस्तोत्रम्। श्लोका ४६। बृहत्स्तोत्ररत्नाकरे काशी सस्करणे पृ० ३२। सरलार्थम्।

१०४ शिवमगलस्तोत्रम् श्लोका स्तोत्रार्णवे पृ० ३३। मगलकरम्।

१०५ शिवमानसपूजास्तोत्रम् श्लोका ५। बृहत्स्तोत्ररत्नाकरयो। अपराध क्षमाकरम्।

१०६ शिवरक्षा-स्तोत्रम् श्लोका १२। याज्ञवल्क्यरचितम् बृहत्स्तोत्ररत्ना करयोध तम् रक्षाकरम्।

१०७ शिव नामावल्यष्टकम् श्लोका आचायशकर कृतम्। दारिद्रय-नाशकम्।

१०८ शिवरामाष्टकम् श्लोका १०। रामानन्दकृतम्, बृहत्स्तोत्ररत्नाकरे, पृ० २८४। विजयदम्।

१०९ शिव शतकम्, श्लोका १०३। वीरराघवाचार्यकृतम स्तोत्रार्णवे पृ० ३६। दुर्गतिनाशकम।

११० शिवपडक्षर-स्तोत्रम श्लोका ७। रुद्रयामलतोवृहत्स्तोत्र रत्नाकरयो धृतम। शिवलोकदम।

१११ शिवसहस्रनाम श्लोका १६४। शाक्तप्रमोदे ४८६ पृष्ठे। सर्वकामदम।

११२ शिवसहस्र नाम महाभारत अनुशासन पर्वणि १७ शाध्याये शाक्तप्रमोदे ४५५ पृष्ठे। श्लोका १८३ अश्वमेधादि फलम।

११३ शिवस्तोत्रम श्लोका ४७। मत्स्यपुराण ४७।१२४ १७३। जीवन रक्षाकरम।

११४ शिवस्तोत्रम्, श्लोका १७। सौरपुराणे ३४।५२ ६८। सर्वेष्टदम्।

११५ शिवस्तोत्रम् श्लोका २०। उपमन्युकृतम बृहत्स्तोत्ररत्नाकरयो वा० वि० १६७६।

११६ शिवस्तोत्रम श्लोका ६। श्री स्वामी विवेकानन्दो रचयिता कन्नड लिप्या स्तवकुसुमाजलौ मुद्रितम। दुःखहरम।

११७ शिवस्तोत्रम् श्लोका २०। स्कान्दे ३।२४।४७ ६६। मद्रायुकृतम् दुःखनाशकम्।

११८ शिव स्तोत्रम श्लोका १३। स्कान्दे ४।१७।३४ ४६। दुःखनाशकम्।

११९ शिवस्तोत्रम श्लोका २९। स्कान्दे ४।७८।२१ ८८। शिवलोकदम्।

१२० शिवापामाजनस्तोत्रम श्लोका १३३। स्कन्द पृथड मुद्रित वा० वि० वि० पु० स० १६७७। निवर्तिकरम।

१२१ शिवापराधक्षमापनस्तोत्रम श्लोका १४। आचार्य शंकर-कृतम बृहत्स्तोत्र रत्नाकरयोर्धृतम क्षमापनपरम।

१२२ शिवाभिलाषाष्टकम श्लोका १८। स्कान्दे ४।१०।१२६ १४३। अभिलाषापूरकम।

१२३ शिवाष्टकम श्लोका १२ स्कान्दे ४।३२।१६८ १७९। सर्वकामदम।

१२४ शिवाष्टकम। श्लोका ८। स्कान्दे ४।४९।४६ ५३। दुःखघ्नम्।

१२५ शिवाशिवस्तोत्रम श्लोका ८। वृहत्स्तोत्ररत्नाकरयो धृतम पृ० २८४।

१२६ श्री कर्कोटक स्तोत्रम श्लोका ११। श्रीकृष्ण—लीलाशुकरचितम् स्तोत्रार्णवे ४७० पृष्ठे। मोक्ष लक्ष्मीदम्।

१२७ श्री चिदम्बर-नटनम। श्लोका ११। स्तोत्रार्णवे पृ० १०७। रोगारिपरिभयनिवारकम्।

१२८ श्री-त्यागराजाष्टकम श्लोका ८। स्तोत्रार्णवे ११०। शान्तिदम्।

१२९ श्री नटेश-स्तव श्लोका ८। स्तोत्रार्णवे ५१०। सर्वाभीष्टदम।

१३० श्रीमहाकालाष्टकम श्लोका २५। स्तोत्रार्णवे ४६८। श्रीकृष्णलीला

शुकरचितम् सौख्य प्राप्तिकरम ।

१३१ श्रीमहादेवाष्टकम श्लोका ६ । स्तोत्रार्णवे ५१२ । भक्तिदम् ।

१३२ श्रीमार्कण्डेयस्वरस्तव । श्लोका ११ । स्तोत्रार्णव १०१ पृ० सर्वभोगदम ।

१३३ श्रीरामलिंगाष्टकम श्लोका ८ स्तोत्रार्णव १६१ पृ० शिवलोकदम् ।

१३४ श्री शिवाष्टोत्तरशतनामस्तोत्रम श्लोका १८ शाक्त प्रमोदे ४८५ । विपत्तिनाशनम ।

१३५ श्रीषडवण-मन्त्राष्टकम श्लोका ६ स्तोत्रार्णव ६१ पृ० समस्त भोगदम् ।

१३६ श्रीषडवणमन्त्राष्टकम श्लोका ८, स्तोत्रार्णव पृ० ५१० । समस्तभोगदम् ।

१३७ श्रीहरिहरस्तोत्रम् । श्लोका १४ । बहत्स्तोत्ररत्नाकरे मुम्बई संस्करणे, पृ० २८४ इष्ट प्रपूरकम् ।

१३८ सदाशिवस्तोत्रम् श्लोका १४ । रुद्रयामलरहस्य २२तमे पटले ।

१३९ सध्याकृत शिवस्तोत्रम, श्लोका २१ । शिवमहापुराण सती-खण्डे ६।११ ३१ । सर्वकामप्राप्तिकरम् ।

१४० सुरकृत शिवस्तोत्रम श्लोका २८ । सौ० पुराण ६१।३३ ६० । पाप-निवारकम् ।

१४१ हनुमत्कवचम, श्लोका ४० । आनन्द रामायण ८।१३।१ ४० । सर्वभीतिनिवारकम ।

१४२ हनुमत्कवचम् श्लोका १८ । अगस्त्यसार संहितात बा० वि० १७१२ । भीतिनिवारकम ।

१४३ हनुमत्कवचम श्लोका ५२ । नारदपु० ५।७८।१ ५२ । असाध्यसाधकम ।

१४४ हनुमत्कवचम श्लोका २२ । बहत्स्तोत्ररत्नाकरे । ब्रह्माण्ड पुराणेऽगस्त्य संहितात रक्षाकरम ।

१४५ हनुमदष्टकम् । श्लोका ६ । बहत्स्तोत्ररत्नाकरे २२८ पृ० शत्रुनाशकम । पृथगपिमुद्रितम् ।

१४६ हनुमद्वडवानलस्तोत्रम । विभीषण कृत शत्रुनाशक बा० वि० पु० स० १७१३ । आगरातोऽपिप्रकाशितम ।

१४७ हनुमत्पञ्चरत्नस्तोत्रम श्लोका ६ । आचार्यशंकर कृतम, अखिलभोगदम ।

१४८ हनुमल्लांगूलस्तोत्रम । श्लोका २३ बहत्स्तोत्ररत्नाकरे २२८ पृ० शत्रुनाशकम पृथगपिमुद्रितम् ।

१४९ हनुमत शत्रुजयस्तोत्रम श्लोका २६ । आगरात प्रकाशितम २०१५ । स० लक्ष्मीदत्त शास्त्री शत्रुनाशकम ।

१५० हनुमत्सहस्रनाम, श्लोका १२८ गीता प्रेस गोरखपुर, २०१८ । सर्व कामदम् ।

१५१ हरस्तोत्रम् श्लोका १६ । स्कान्दे ।२२।६६ ८७ । सर्वदुःखहरम् ।

## पञ्चमोऽध्याय

# विष्णु-स्तोत्राणि

## विष्णु

### १ विष्णु शब्दार्थ

वेवेष्टि व्याप्नोति विश्व य स विष्णु 'विष्लृ व्याप्तौ धातो विषे किच्चेति नुप्रत्यये सिध्यति । वेष्टतिमिवति प्राप्यायते विश्वमिति वा । विष्णाति वियुनक्ति भक्तान मायापसारेण संसारादितिवा । विशति सर्वभूतानि योविशन्तिसर्वभूतानीति वा ।'[1]

विष्णु पुराणेऽप्ययमर्थ उक्त । तथा च—

यस्मात् विश्वमिद सर्व तस्य शक्त्या महात्मन ।
तस्मात्स एवोच्यते विष्णुर्विशधाता प्रवेशनात् ॥१॥[2]

शब्दकल्पद्रुमे चायमर्थोविशद रूपेणोक्त[3] अथ द्वादशादित्यानामन्यतम स्तथा च महाभारते—

एकादशस्तथा त्वष्टा द्वादशोविष्णुरुच्यते ।
जघन्यजस्तु सर्वेषामादित्यानां गुणाधिक ॥१॥[4]

तत्रैव बृहत्वाद विष्णुरित्यपि । बृहत्वाद्विष्णुरुच्यते'[5] पद्मपुराणे च स भगवान्विष्णु प्रकृत्या प्रविवेशह ।[6] अन्यत्र च तस्मात्स एवं स्मृतोविष्णु विश्वधाता प्रवेशनात् ।[7] निरुक्ते च—'विष्णुर्विशतर्वाव्यश्नोतर्वा अत्र अशू व्याप्तौ धातु स्वादि पठित ।'[8]

यतोऽस्य कल्पकोटिशतैरपि न क्षीयते नापिक्षरति तस्माद विष्णुरुच्यते । तथा च मात्स्ये—

---

१ हलायुधकोश प ६२६
२ विष्णुपुराण ५।१।४६
३ शब्दकल्पद्रुम राजाराधाकान्त चतुर्थ भाग ४५२
४ महाभारते १।६५।१६
५ तत्रैव ५।७१।३६
६ पद्मपुराण ६।२२६।६५
७ वामपुराणे ६६।११८
८ निरुक्ते १२।३८

न क्षीयसे नक्षरसि कल्प कोटि गतरपि ।
तस्मात्वमक्षयत्वाच्च विष्णुरित्यमिघोयस ॥१॥
विष्टघ च त्वया सव जगत्स्थावर जगमम् ।
जगद्विष्टम्मनाच्चव विष्णुर्वेति प्रकीत्यत ॥२॥[1]
विष्टम्य तिष्ठस नित्य त्रलोक्य सचराचरम ।
यज्ञग धवनगर सुमहद्भूत पन्नगम ॥१॥
तस्माद्विष्णुरितिप्रोक्त, स्वयमेव स्वयम्भुवा ॥[2]

निष्कष

१ विष्णुर्व्यापक ।[3]
२ वहच्छरीरत्वाद्विष्णुरिति ऋग्वेदे ।[4]
३ विष्णुर्जगत्पालक तथा च विष्णुनरधिय[5] यजुर्वेदे रर्धहिंसाया रन्यति हिनस्ति इति रधिप हृता न रधिप अर्रधिप जगत्पालक इति तत्रैव महीधर ।
४ विष्णु समन्तात्प्रीणयिता भक्तरक्षकस्तथा च विष्णुरापीतपा आसमन्तात्प्रीणाति स्वस्मिन प्रीनिमताभक्तान पातिरक्षतीति आप्री तपा तदगुण विशिष्ट इति महीधर ।[6]
५ विष्णुजगद्रक्षकस्तथा च शुक्ल यजुर्वेदे । विष्णवे विभूयपाय स्वाहा।[7] नितरा भूत्वा मत्स्याद्यवतार कृत्वा पातीति निभूयपा तस्म इतिमहीधर ।
६ विष्णु मीढवान ।[8]
७ इच्छा प्रपूरक ।[9]
८ विष्णुक ष्ण ।[10] महानारायणोपनिषद्यपि विष्णुर्व्यापक उक्त ।
९ वहददेवतायम च—

---

१ मत्स्यपुराण २४७।३८ ३९
२ तत्रव २४७।४१ ४२
३ शुक्ल यजुर्वेदे १।६। याख्यायाम्
४ ऋकसंहितायाम् १।१५५।६
५ शुक्ल यजुर्वेदे ८।५५
६ तत्रव ८।५७
७ तत्रव २२।२
८ ऋकसंहितायाम् ७।१ ।१
९ ऋकसंहितायाम ७।१००।१
१० तत्रव ७।१५।१४

विष्णात विशतेर्वास्यात् वेवेष्टेर्व्याप्तिकर्मण ।
विष्णुनिरुच्यते सूय सव सवातरश्च य ॥३॥[१]

१० सृष्ट्यादाप्रप सृष्ट्वा तासु बीजमवासृजत तदण्डमयुनवर्षे सूय समवमूव तत्र प्रवेशनात व्याप्त्या च भगवा विष्णुरित्यभिधीयते । तथा च मत्स्य पुराणे ।

प्राविश्या तमहातजा स्वयमवात्म-सम्भव ।
प्रभावादशितद्व्याप्त्या विष्णुत्वमगमत्पुन ॥१॥[२]

शाङ्करभाष्ये च—

'वेवेष्टि व्याप्नोतीति विष्णु विरेव्याप्त्यभिधायिना नुकप्रत्ययान्तस्य रूपमिति । देश-काल-परिच्छेदशून्य इत्यथ ।"[३]

११ महाभारत स्वयमवाहमगवान यथतो रोदसी व्याप्य स्थीयते मम विस्तारश्चाधिकोऽस्ति एव विष्णुरिति सना तथा च—

व्याप्त मरोदसी वाथ कान्तिश्चाभ्यधिका स्थिता ।
क्रमणाच्चाप्यह पाथ विष्णुरित्यभिसंज्ञित ॥[४]

जगति यत्किंचिद्दृश्यत तत्सव व्याप्यतिष्ठति ततो विष्णुस्तथा च बहृनारायणोपनिषदि ।

यत्किंचिज्जगत्सव, दृश्यते श्रूयतेऽपि वा ।
अन्तर्बहिश्च तत्सव, व्याप्य नारायण स्थित ॥१॥[५]

एव च विष्णु नामार्थे तत्स्वरूप नत्त्याऽपि सन्निहिता । व्याप्ति प्रवेश इत्यार्थोऽत्र प्रकनिरुपण सन्निविष्ट । सवत्र प्रवेशोऽपि व्याप्तिरेव । व्याप्तिश्च प्रवेशविना न सम्भाव्यत । अतोविष्णुमय जगत ।

१२ निरुक्ते व्युपसगकपिज बधन धातोरपि निष्पाद्यत सव जगत् नियमयनीति भाव तथा च—

अथ यद्विषितो भवति तद विष्णुरिति विषिणोतिविषिणाति वाविष्णु '[६] विविध कर्मभि तत्फलश्च सिनाति जीवानिति विष्णु ।

१३ श्रीमध्वाचाय बी-गति व्याप्ति प्रजननकान्त्यसनखादनपु विष्लृव्याप्तौ वा धातो विश प्रवेशन चेतिस्वीकरोति । अत्र प्रकृतिरुपत्वेन । निम्नरीत्यापि निवचन दृश्यते ।

---

१ बहद्वतायाम् २।६६
२ मत्स्यपुराण २।३०
३ विष्णुसहस्रनाम्नि १४ श्लोक शाङ्करभाष्ये (गीता प्रस गोरखपुर)
४ महाभारते शान्तिपर्वणि ४१।४२ ४३
५ बहन्नारायणोपनिषदि १३।१।२
६ निरुक्ते १२।१८

१४ विश्व नियमयतीति विष्णु ।

१५ विशेषेण नूयते जनरिति विष्णु । तथा च तद विष्णो परम पद सदा पश्यन्ति सूरय दिवीव चक्षुराततं ।'[१]

मागवते च—

त एतदधिगच्छन्ति विष्णोयत्परमपदम ।
अह ममेति दौज य न यत्र दहगेजम् ॥१॥[२]

एव च समस्त-व्युत्पत्तिचर्चालोचनया विष्णुरित्यत्र प्रकृतित्वेन पचधातव । विष्लृ व्याप्तौ, विश प्रवशने अशूव्याप्तौ, पिज बन्धने, व्युपसगक णुस्तुतौ चात । धात्वर्थश्च सामान्यतोऽत्र विष्णु शब्दे सन्निविष्टा सवत्र व्याप्ति, सवत्र प्रवेश सवस्य नियामक । वीगतौधातो सवत्र गमनशीलश्चेति । प्रकतित्वादेव विष्णो सवश्रेष्ठममायाति ।

२ प्रमुख-नाम्नामर्था.

विष्णु स्तोत्रेषु विशेषेण सामान्यतोलौकिकसाहित्य समागताना विष्णु नाम्नामर्था निर्दिश्यन्त यथा स्तोत्रावबोध सुकर स्यात ।

**अच्युत** —यतो भगवान स्वस्थानात कस्थ्यात चद्दयाच्च न च्यवतेऽतो ऽच्युत इत्युदीय्यत । तथा च मात्स्य—

यस्मान्नच्यवतेस्थानात तस्मात्सकीत्यसेऽच्युत ।[३]

**हरि** —हरतिभक्तजनदु खानिति हरि । यतोऽय ब्रह्मेन्द्र रुद्र-यमादीन निगह्य हरतीत्यतोहरिरुच्यत । तथा च—मात्स्ये—

ब्रह्माणमिन्द्र च यम, रुद्र वरुणमेव च ।
निगृह्य हरसे यस्मा, तस्माद्धरिरिहोच्यते ॥१॥[४]

**त्रिविक्रम** —यस्तजसा त्रिभि पदक्रमजगन्मातिस्म तथा च बहद्देवता-याम्—

त्रीणिमान्ति रजांस्यस्य, यत्पदानि तु तेजसा ।
तेनमेधातिथि प्राह, विष्णुमन त्रिविक्रमम ॥१॥[५]

**वासुदेव** —यत सर्वाणि भूतानि भगवति वसन्ति भगवाश्च सव भूतषु वसति, वासुदेवस्तत उच्यते तथा च—

---

१ ऋकसहितायाम् ७।२२।२०

२ भागवते १२।६।३३

३ मत्स्यपुराण २४७।३५

४ तत्रैव २४७।३६।

५. बहद्दवतायाम २।६४

सर्वाणि तत्र भूतानि वसन्ति परमात्मनि ।
भूतेषु च सर्वात्मा वासुदेवस्ततः स्मृतः ॥१॥[1]

मात्स्येऽपि—वसतित्वयिभूतानि ब्रह्मादीनि युगक्षये ।
त्वं वा वाससिभूतेषु वासुदेवस्तथोच्यसे ॥१॥[2]

सङ्कर्षणवासुदेव प्रद्युम्नानिरुद्धाश्चेति चतुर्व्यूहा । षड्भिर्गुणैः परिपूर्ण मूर्ति सूक्ष्मानिगद्यते । इयमेव मूर्ति वासुदेवशब्देनाभिधीयते ।

यश्च वासुदेवोऽन्तर्यामी जीवपुस्थित जीवाना प्रेरकश्च । यश्चात्मनि वेदान्तवाक्यैर्निरूप्यते । स च—सत्त्व विशुद्ध मनस्तत्र यः प्रकाशते स वासुदेव इति—तथा च सर्वदर्शनसंग्रहे—

सङ्कर्षणोवासुदेव प्रद्युम्नश्चानिरुद्धक ।
व्यूहश्चतुर्विधा ज्ञेय, सूक्ष्म सम्पूर्णषट्गुणकम ॥१॥
तदेव वासुदेवाख्य, पर ब्रह्म निगद्यते ।
अन्तर्यामी जीवसंस्थो, जीव प्रेरक इरिता ॥२॥
य आत्मनीति वेदान्त, वाक्यजालैर्निरूपित ।
अर्चोपासनया लिप्त कल्मषेऽधिकृतामवेत ॥३॥[3]

सगुणनिर्गुणश्च भगवान सर्वव्याप्याधितिष्ठति । चतुष्पुरूपेषु स्थितो यनायञ्चानमास्ति । सामूर्ति ज्वालमालापरिवृताशुक्ला परिदृश्यते । इयमेव वासुदेवशब्देनाभिधीयते तथा च ब्रह्मपुराणे—

स देवाभगवान्सर्व, व्याप्य नारायणो विभु ।
चतुर्धासंस्थिता ब्रह्म सगुणा निर्गुणस्तथा ॥१॥
एकामूर्तिरनुद्देश्या शुक्ला पश्यन्ति ता बुधा ।
ज्वालमालावनद्धाङ्गी निष्ठा सा योगिनापरा ॥२॥
दूरस्था चान्तिकस्था च, विज्ञेया सागुणातिगा ।
वासुदेवाभिधानाऽसौ निर्ममत्वेन दृश्यते ॥३॥[4]

अनन्त—न विद्यतेऽन्तः यस्य सोऽनन्त । यस्यान्त देवासुर-मनुष्या नाधिगच्छन्ति । सर्वत्रव्यापकत्वाद घटत इत्थम । तथा च—

यस्माद्ब्रह्माद्यान्येवा, मुनयश्चाग्रतजम ।
नतान्न त्वधिगच्छन्ति तेनानन्तस्त्वमुच्यसे ॥१॥[5]

---

१ विष्णुपुराणे ६१५।८०
२ मत्स्यपुराणे २४७।४५ ४६
३ सर्वदर्शनसंग्रहे पृ० २२६ श्री माधवाचार्य कृत प्रो० उमाशंकर कृत भाष्योपेत चौ० प्रे० वाराणसी १९६४
४ ब्रह्मपुराणे आनन्दाश्रम पुना प० १८० । १७ १९
५. मत्स्यपुराणे २४७।१७ ३८

सनातन—यो यशसा लक्ष्म्या शरीरेण च भूतानि सम्मानयति यश्च *सदा तिष्ठति । तथा च*—

सम्मानयसिभूतानि, वपुषा यशसा श्रिया ।
परेण वपुषादव, तस्माच्चासि सनातन ॥१॥[1]

नारायण—

१ नारा अयन यस्य स । अत सृष्ट्यादौ भगवान जलमवासृजत् । तत्र च बीजाधानात जगत्सवमभूत । तथा च मात्स्ये—

नारा इत्युच्यत ह्याप, ऋषिभिस्तत्वदर्शिभि
अयन तस्य ता पूव तेन नारायण स्मृत ॥१॥[2]

कूर्मे च—नाराणामयनत्वान नारायणस्तथा च—

२ अनुपादानात चानुपूर्व्यांन स्वयभूरिति स्मृत ।
*नाराणामयन यस्मात तस्मान्नारायण स्मृत ॥१॥*[3]

३ नर आत्मा ततो जाता याकाशादीनि कार्याणि तानि अय कारणात्मना व्याप्नोति । अतश्च ता यनमस्यति, शाकरमाष्य ।[4] नारायणो पनिषदि च—

४ यच्च किंचित् जगत् सव दृश्यतेश्रूयतेऽथवा
अ तर्बहिश्च तत्साव व्याप्य नारायण स्थित ॥१॥[5]

५ प्रलये नराणाम् जीवानामयनत्वान नारायण
तथा च—तत्तरीय—
तत्प्रय त्यमिसम्विशन्ति ।[6]

६ नर स्वरूपप्रवाह नित्यवस्तूनि तेषासमूहा नारा त अयन आश्रय *यस्य स ।*

७ नारा अनश्वरविभूतिमुक्ता मानस्तषामयन नारायण ।
लिगमशिप्यसोराश्रयत्वाल्लिगस्य ।[7]

८ आरा दोपा तद्विरुद्धा गुणा नारास्तषामयन दोषविरुद्धगुणानामाश्रय इति यावत् ।

९ आराणा दोषाणां अयन न भवति, दोषाश्रयोन भवतीति यावत् ।

---

१ तत्रैव २४७।३६
२ तत्रव २४७।४२
३ कूमपुराणे ४।६० मनसुखराय मोर क्लाइव रोड कलकत्ता २०१८
४ विष्णुसहस्रनाम्नि ३६ श्लोके शकरभाष्ये
५ नारायणोपनिषदि १३
६ तत्तरीयोपनिषदि ३।१
७ उद्धतो ऽष्टाक्षरीयप्लवे इतिसुन्दरमनोरमायाम्

१० दायरहितवेदा नारा प्रतिपाद्यतया तदयनत्वा नारायण ।
११ 'न यज्जातानि तत्त्वानि नारायणीति ततो विदु ।
तेषामयनभूतोय स नारायण इति स्मृत ॥१॥'[1]
१२ नरस्य सर्म्बा धनार अनान तदद्यति गच्छतीति न य स नारायण ।
१३ नार अहिंसव ईयते प्राप्यत अययतवानारायण ।
१४ आरा कष्टानि नारा सुखानि तदयनत्वात नारायण ।

उरुक्रम

१ उरुर्नाममहान्नम पराक्रम यस्य स ।[2]
२ उरुमहान क्रम आतियस्य स तथा च—
'तदधावतोऽयानत्यति' ।[3]
३ उरुमहान्नम पादविक्षेपो यस्य स । पाद पदयत ।[4]
४ ईश्वरायशोऽस्य शब्दस्तथा च—
तदस्य प्रियमभिपाथो अश्या नरो यत्र देवयवो मदन्ति ।
उरुक्रमस्य सहि ब धु, रित्थाविष्णो पदे परम मध्व ॥[5]

पुरुष

१ पुरपु भूरिपु उत्कपशालिमत्वेपुसीदतीत पुरपस्तथा च शाकर भाष्य[6] गीताया च—
यत यत विभूतिमत्सत्व श्रीमदूर्जितमेव वा
तत्तदेवावगच्छ त्व ममतेजोंऽश-सम्भवम ॥१॥[7]
२ पुरणिफलानि सनोतीति ददातीत्यथ ।
३ पुरुणिभुवनानि सहारकाले, स्यति अ तकरोति ।
४ पूरणान सादनादवा पुरुपस्तथा च—
पूरणात्सादनाच्चैव ततोऽसौपुरुप स्मृत ।[8]
तथा च—

१ माधवाचार्य ।
२ सत्यार्थप्रकाशे प्रथम स०, पृ० ८
३ ईशोपनिषदि ४
४ निरुक्ते २।७
५ ऋक्संहितायाम् १।१५४।५
६ विष्णुसहस्रनाम्नि १५ श्लो० शां० भाष्ये
७ गीतायाम् १ ।४७
८ महाभारते, उद्योगपर्व ९१

'स यत्पूर्वोऽस्मात् सर्वस्मात् सर्वान्पाप्मन औषत् तस्मात् पुरुष ।"[1]

५ 'पुरुषप्रभू तमाभाग्य प्रानन्द मनोनीति पुरुष' यथात्र संहितायाम्—

उतामृतत्वस्येशानो, यदन्नेनाति रोहति ।
एतावानस्य महिमा ततो ज्यायांश्च पुरुष ॥[2]

६ परं विपद्य यस्मात्तस्मात्पुरुष उच्यते ।[3]

७ पुरं शरीरं तस्मिन् शेत इतिपुरुषस्तथा च—
नवद्वारं पुरं पुण्यमेतैर्भावैः समन्वितम् ।
व्याप्य शेते महात्मा यः तस्मात्पुरुष उच्यते ॥१॥[4]

८ पुरुन्यस्ताशेष-पापान आसीत्पुरा पूर्व मिति विग्रहं कृत्वा व्युत्पादितः पुरुषः ।[5]

३ हिरण्यगर्भ

१ हिरण्यतेजसो नाम हिरण्यानि सूर्याग्नीनि तेजांसि गर्भे यस्य स । अथवा हिरण्याग्नीना तेजसागर्भ ।[6]

२ ज्योतिर्वै हिरण्यम्'[7] तद्गर्भं यस्य स ।

३ तेजोहिरण्यं तद्गर्भे यस्य स ।[8]

४ यो हिरण्यानां तेजसो गर्भ उत्पत्ति निमित्तं अधिकरणं स हिरण्यगर्भ

५ अथवाद्वियातुजस्य हिनोति रमतश्च धातुद्वयात । समुदितात् अन्य प्रत्यये बाहुलकात्स्वरूपसिद्धि हिन्वतत आपदि दुर्भिक्षो रमयति स तथा ।[9]

६ हिरण्यगर्भे हिरण्मयोगर्भोऽस्येति हिरण्य गर्भ । गर्भातिगिरत्यर्थमितिवा ।[10]

७ हिरण्यमण्डमद्वीय समूत तदस्यगर्भं इति ।

८ हिरण्मयाण्डान्तर्वनित्वात् हिरण्यगर्भो ब्रह्म विरचिस्तदात्मा तथा

---

१ बृहदारण्यके १।४।१
२ ऋक्संहितायाम् १०।९०।२
३ महाभारत उ पर्वणि १३३।३५
४ तत्रैव २१०।३२
५ विष्णुसहस्रनाम्नि १५ शं० भाष्ये
६ सत्यार्थप्रकाशे प्र० स० पृ० ५
७ शतपथ ब्राह्मणे ६।७।१।२
८ तैत्तिरीयब्राह्मणे १।८।९।१
९ निघण्टौ १०।२३ देवराज
१० निरुक्ते १०।२३

च—'हिरण्यगर्भ समवर्तताग्रे ।'[1]

९ निर्दोष निरवद्य इत्यपरम् सत्त्वात्मकं द्रव्यं विशेषस्य हिरण्मयं साम्यात हिरण्यं परमं धाम तस्य गर्भभूतः तत्र नित्यं वासात ॥"[2]

१० दृप्यत स्वप्रभयासदीपयत इति हिरण्यम एतेषाम हिरण्यानां गर्भ उपदाता हिरण्यगर्भः परमेश्वर ।

## हृषीकेश

१ हृषीकाणामिन्द्रियाणामीशः हृषीकेश । तथा च मात्स्ये हृषीकाणीन्द्रियाण्याहुस्तत्त्वज्ञानविशारदाः । ईशिता च त्वमेतेषां, हृषीकेश स्तदाच्यसे ॥[3]

२ हृषीकेश क्षेत्रज्ञरूपमाक्यस्य वा सूर्यरूपस्य चन्द्ररूपस्य जगत्प्रीतिकराहृष्टा केशाररश्मयो यस्य स हृषीकेश तथा च महाभारते ।

सूर्याचन्द्रमसौ शश्वदंशुभिः केशसंज्ञितैः ।
बोधयन्स्वापयंश्चैव, जगदुत्तिष्ठते पृथक् ॥१॥
बोधनात्स्वापनाच्चैव जगतो हर्षणं भवेत् ।
अग्निषोमकृतैरेव कर्मभिः पाण्डुनन्दन ॥२॥
हृषीकेशो महेशानो वरदो लोकभावन[4] ॥

केशव—अभिरूपा केशा यस्य स इत्यर्थे केशाद्वोऽन्यतरस्यामिति[5] प्रशस्तऽर्थेव ।

यद्वा—

"कश्च अश्च ईशश्च त्रिमूर्तय कशास्ते यद्वशे वर्तन्ते स केशव । केशिवधाद्वा, तथा च विष्णुपुराण ।

यस्मात्त्वयैव दुष्टात्मा हतः केशी जनार्दन ।
तस्मात्केशवनाम्ना त्वं लोके ख्यातो भविष्यसि ॥१॥[6]

गोविन्द—गां विन्दतीति गोविन्द यतोह्ययं युगे युगे गवाणी गां धेनु गां पृथ्वीं विन्दतीत्यतो गोविन्द उच्यते । तथा च । मत्स्यपुराणे—

---

१ ऋग्वेदे १०।१२१।१
२ भगवद्गुणदर्पणभाष्य, रमनाथ
३ मत्स्यपुराण २४०।४५
४ महाभारते शान्तिपर्वणि ३२४।६६ ६७
५ विष्णुसहस्रनाम्नि १६ शं भाष्य अष्टाध्यायी ५।२।१०९
६ विष्णुपुराण ५।१६।२३

'युगे युगे प्रणष्टा गा, विष्णो विन्दसि तत्वत ।
गोविन्देति ततो नाम्ना प्रोच्यसे ऋषिभिस्तथा ॥१॥'[1]

सङ्कर्षण —यतो भगवान् युगे युगे प्रलये च भूतानि कर्षयति अत सङ्कर्षणस्तथा च तत्रैव—

सङ्कर्षयसि भूतानि, कल्पे कल्पे पुन पुन
तत सङ्कर्षण प्रोक्त, तत्वज्ञान विशारदै ॥१॥[2]

प्रद्युम्न —'प्रतिव्यूहेन तिष्ठति, सदेवासुरराक्षसा ।
प्रविशु सर्वधर्माणा, प्रद्युम्नस्तेन चोच्यते ॥१॥[3]

अनिरुद्ध—निरुद्धोविद्यत यस्मान्न ते भूतेषु कश्चन ।
अनिरुद्धस्तत प्रोक्त पूर्वमेव महर्षिभि ॥[4]

माधव

१ माया लक्ष्म्या धव पतिर्माधवो विष्णु ।
२ माया विद्याया धव ईश माधव ।
तथा च हरिवंशे—

मा विद्याच हरे प्रोक्ता तस्या ईशो यतोभवान ।
तस्मा माधवनामासि धव स्वामीतिशब्दित ॥१॥[5]

माहात्म्यम—विष्णोर्नुक वीर्याणि प्रवोच य पार्थिवानि विममे रजांसि
योअस्कभायदुत्तर सधस्थ विचक्रमाणस्त्रेधोरुगाय ॥[6]

विष्णोर्नुवीर्यगणना यतमोर्हतीह य पार्थिवान्यपि कविर्विममे रजांसि ।
चस्कम्भय स्वरहसा स्खलतात्रिपृष्ठ, यस्मात्त्रिसाम्य सदनादुरु कम्पमानम ॥[7]

विष्णोर्भगवत पराक्रम-वर्णने क समर्थोऽस्ति योविष्णु पृथिव्यामन्तरिक्षे च पराक्रम दर्शितवान । कदाचिद धीमान रेणून गणयितु समर्थो भवतु नरो न पुनर्विष्णुगुणगणनायाम। श्रुतिस्मृति पुराणदिभि बहुधाऽस्य माहात्म्यमुद्घाप्यत । तथा च 'यज्ञोवविष्णु [8] अत्रोक्तम सर्वत्रसृष्टौ पालने सहारे च ब्रह्मविष्णु

---

१ मत्स्यपुराणे २४७।४३
२ तत्रैव २४७। ४६
३ तत्रैव २४७।४७
४ मत्स्यपुराण २४७।४८
५ हरिवंश ३।८८।४६
६ ऋकसहितायाम् १।१५४।१
७ श्रीमद्भागवते २।७।४०
८ शुक्ल यजुर्वेदे पृ० ८

महेश्वरा अभिमानिन्यो देवता, एवमेव शुक्ल यजुर्वेदे विष्णु भगवन्त श्रेष्ठमाह।[1] असारभूतेऽत्र विष्णो समाराधनमेव श्रेष्ठम। तथा च गारुडे —

असारभूत ससारे, सारमेक विनिर्दिशेत।
असाराशेष-लोकस्य सारमाराधन हरे ॥१॥[2]

यश्चन मातवत्परिरक्षन्त विस्मरति स ब्रह्मघाती तस्मिन्नरकस्थे यमस्त भूयोभूय पृच्छति 'कि त्वया विष्णुर्नार्चित" द्रव्यहीनेन जलहीनेन वापि विष्णा रर्चा कार्या। शास्त्राणामिदमेव मतम। तथा च गारुडे—

मातवत्परिरक्षन्त सृष्टिसहारकारणम।
यो न पूजयते विष्णु तविद्याद ब्रह्मघातकम ॥१॥
नरके पच्यत यस्तु यमेन परिभाषित।
किन्त्वया नार्चितो दव केशव केशिनाशन ॥२॥
उदकेनाप्यभावेन द्रव्याणामर्चित प्रभु।
यो ददाति स्वक लोक स त्वयाकिन्नयार्चित ॥३॥[3]
आलोक्य सव शास्त्राणि, विचार्य च पुन पुन।
इदमेव सुनिष्पन्न, ध्येयो नारायण सदा ॥[4]

सवयज्ञतपोदानादिकाक्रिया तीर्थसेवा च भगवतोविष्णो प्रणामेनापि समता न यान्ति। भगवत्स्मरण सवविपदविमोक्षणम्—

किन्तस्य दान कि तीर्थं कि तपोभि क्रिमध्वर।
योनित्य ध्यायत देव, नारायणमनन्यधी ॥१॥
षष्टितीर्थं सहस्राणि षष्ठितायज्ञतानि च।
नारायण प्रणामस्य, कला नार्हन्ति षोडशीम् ॥२॥
कृते पापानुतापा वै, यस्य पुस प्रजायते।
प्रायश्चित्त तु तस्यक हरिसस्मरण परम् ॥३॥
गगा-स्नान-सहस्रेण पुष्कर-स्नान कोटिषु।
यत्पाप विलययाति स्मृत नश्यति तद्धरो ॥४॥[5]

य सदा निष्काम भावेन भगवन्त विष्णु सेवत ॥ इह यथावत्सुख भुक्त्वा ऽन्तवकुण्ठ याति मुक्ति च लभते ॥ तथा च ब्रह्मवर्ते—

---

१ तत्रैव ४१।१ भाष्ये
२ गरुडपुराणे २३१ अ०
३ तत्रैव
४ तत्रैव २३४
५ गरुडपुराण २३४

धर्मभोग सकाम, निष्कामो निरुपद्रव ।
स याति देहत्यक्त्वा च, पद विष्णोर्निरामयम ॥१॥
पुनरागमने नास्ति, तेषा निष्कर्मिणा गति ।
यं सेवन्त चद्विविध कृष्णमात्मानमेव च ॥२॥
य च नारायण भक्त्या सेवन्त च चतुर्विधम् ।
वैकुण्ठ याति ते सर्वे दिव्यरूप विधारिण ॥३॥[1]

अखिल-ब्रह्माण्ड निखिल कार्यजातम् विष्णुनैव चाल्यते भूतोयाग्निसूर्य चन्द्रतारा वायवादयोऽजनव प्रेरिता स्व-स्व कार्य सम्पादयन्ति । भगवतश्चरित श्रोतणामघमोचनम् ॥

उरुक्रमस्य चरित श्रोतणामघमोचनम् ।
पार महिम्न उरुविक्रमतो, गृणानो पार्थिवानपि
विममे स रजांसि भूय ।[2]

तैत्तरीयोपनिषदि च—

भीषास्माद्वात पवते, भीषादेति सूर्य ।
भीषास्मादग्निश्चेन्द्रश्च मृत्युर्धावति पञ्चमम ॥१॥[3]

भागवतेऽपि—

मद्भयात वातिवातोऽय सूर्यस्तपति मद्भयात ।
मद्भयात वर्षते देवा, भगणो भाति मद्भयात ॥१॥
यद् वनस्पतयो भीता लताश्चौषधिभि सह ।
स्वे स्वे कालेऽभिगृह्णन्ति पुष्पाणि च फलानि च ॥२॥
स्रवन्ति सरितो भीता नोत्सर्पत्युदधियत ।
अग्निरिन्धसगिरिभि भूर्यमज्जति यद्भयात ॥३॥
सोऽनन्तोऽन्तकरो कालोऽनादिरादिकृदव्यय ।
जन जनेन जनयन मारयन्मृत्युनान्तकम ॥४॥[4]

मनुष्याणां परमो धर्म एकेन मनसा भगवत स्मरणम । तच्चाहैतुकम । यज्ञतप शास्त्र वेदादयो भगवत्परा एव स्वधर्मस्य पालनस्य कर्ममात्रमुद्दिश्य भगवत्तोषणम ॥ निष्काम कर्मयोगेनम नरस्तथा न शुद्धयति यथा भगवते विष्णुनामोच्चारणेन । अज्ञानादपि भगवन्नामोच्चारणनिखिलाघमोचनम । यमादूता सम्बोध्य वदति यत्त एवात्मनया य मनावाक्कर्मभिर्भगवन्नामोच्चारण न कुर्वन्ति । महतामपिपापानाम प्रायश्चित्त भगवन्नामोच्चारणम । तथा च—

---

१ ब्रह्मवैवर्ते प्रकृतिखण्ड २४।११ १३
२ भागवते ८।२३।२८ २९
३ तैत्तरीयोपनिषदि २।८ नृसिंहपूर्वतापिन्युपनिषदि च १०
४ श्रीमद्भागवते ३।२९।४० ४२ तथा ४५

स वपुसा परो धम यतो भक्तिरधीभजे ।
अहैतुक्यव्यवहिता, ययात्मा सम्प्रसीदति ॥१॥
स्वनुष्ठितस्य धमस्य, ममिद्धिहरितोषणम ।
धम स्वनुष्ठिन पुसा, विष्वक्सेन-कथासु य ॥२॥
नोत्पादयेद यदिरतिश्रममएव हि केवलम ॥३॥[1]
तस्मादेकनमनसा, भगवान्सात्वता पति ।
श्रोतव्य कीर्तितव्यश्च ध्येय पूज्यश्चनित्यदा ॥१॥

ऋग्वेदेऽपि—तमुस्तोतार पूव्य यथोवित
ऋतस्यगभ जनुषापिपतन ।

प्रस्यजनय नोनाम नामचित विविक्त महस्तेविष्णो सुमतियजामह ।[2]

ययामति विश्वस्य कारण विष्णु स्तुहि स हि वेदान्तप्रतिपाद्य । तस्य स्तुत्याजीवनमरणरहिता भवन ।

प्राचीनतमायापि नित्यनूतनाय स्रष्ट्रे स्वयम्भुव लक्ष्म्या पत्ये विष्णवे य आत्मानमपयति स यथावद्भोगानभुक्त्वा अन्ते च परम पदमधिगच्छति । तथा चक सहितायाम ।

य पूर्व्याय वेधसे नवीयसे समु जानय विष्णवे ददासति ।
यो जातमस्य महतो महिब्रवत् सदुश्रवोऽभियुज्य चिदभ्यसत ॥[3]

परात्पर भगवन्त विष्णु दृष्टवा हृदयग्रन्थयोभिद्यन्ते सशयाश्चछिद्यन्ते तथा च मुण्डकोपनिषदि ।

भिद्यते हृदयग्रन्थि छिद्यन्ते सवसशया ।
क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्ट परात्परे ॥१॥[4]

कृत ध्यायन त्रेताया यज्ञ द्वापरेचाचन यत्फलमवाप्नोति नरस्तत्कलौ कीतनादेव । तथा च विष्णु पुराण ।

ध्यायन्कृत यजन यज्ञ स्त्रेताया द्वापरेऽर्चयन ।
यदाप्नोति तदाप्नाति कलौ सकीर्त्यकेशवम ॥१॥[5]

गारुडे च—चिन्त्यमान समस्ताना क्लेशाना हानिदोहि [illegible] ।
ममुत्सृजाखिल चिन्त्य सोऽच्युत किं न चिन्त्यते ॥२॥

---

१ श्रीमद्भागवते १।२।६ १३ ८
२ ऋग्वेदे १। १५६।३ १६८८ प० रामगोविन्द हिन्दी टीका सते भागलपुर
३ तत्रव १।१५६।२
४ मुण्डकोपनिषदि २।२।८
५ विष्णुपुराण ६।२ १७

विष्णोरुच्यतमलोके भूरिश्रृंगाणा गवाम वसतिर्या अयास सन्ति तथा च—

तावावास्तू युश्यसि गमध्य यत्र गाव भूरिश्रृंगाअयास ।[1]

विष्णु परमेश्वर पृथिव्या प्रदेशान विविधपाद श्रमणचकार। इत्युक्त्वात्रिविक्रमस्याप्यवतारस्य सकत । तथा च— अतोदेवा अवन्तु ना यतो विष्णुर्विचक्रम पृथिव्या सप्तधामभि ।[1] व्याख्याया विष्णु परमेश्वर सप्तधामभि सप्तभि गायत्र्यादिभि छन्दोभि साधनभूतयत पृथिव्या यस्मात्प्रदेशात् विविधपदक्रमण कृतवान स विष्णुर्व्यापकस्तथा च महानारायणोपनिषदि।

'श नो विष्णुररुक्रम ।[2]

सर्वेषामदेवाना मुख्यतमा विष्णुस्तथा च तत्रैव—

विष्णुमुखा व छन्दोभिरिमान लोकान यजय्यम
अभ्यजयन महाइन्द्रोवज्रबाहू षोडशी शमयच्छतु ॥[3]

वहद्देवतायामपि विष्णोर्निर्देशोमहेन्द्रमदेव सहकृतोऽस्ति ॥

इन्द्रण मरुदिमश्च, सोमेन वरुणेन च ।
पर्जन्येनतुमिश्चव विष्णुना चास्य सश्रय ॥[4]

तत्तरीयोपनिषद्यपि 'नारायणायविदमहे विष्णु प्रचोदयात ।[5] भगवान्विष्णु परात्पर सहस्र शिरस्कोविश्व परब्रह्म-स्वरूप सर्वदेवास्तमनुयान्ति। देवेषु चाय श्रेष्ठस्तथा च—

सहस्रशीर्ष देव विश्वाक्ष विश्व शम्भुवम ।
विश्व नारायण देव, अक्षर परम प्रभुम ॥१॥
विश्वत परम नित्य विश्व नारायण हरिम ।
विश्वमेवेद पुरुष स्तस्माद्विश्वमुपजीवति ॥२॥
पतिविश्वस्यात्मेश्वर शाश्वत शिवमच्युतम ।
नारायण महाज्ञेय विश्वात्मान परायणम ॥३॥[6]

वहद्देवतायामपि वामनावतारस्य निर्देश कतस्तथा च—

---

१ ऋग्वेदे १।१५४।६
२ ऋकसहितायाम् १।२२।१६
३ महानारायणोपनिषदि २४
४ तत्रव १।४८
५ बृहद्वतायाम १।११७
६ तत्तरीयें १ प्रपाठके
७ महानारायणोपनिषदि १३।१३

त्रीणिमानि रजांस्यस्य यत्पदानि तु तेजसा ।
तनमगातिथि प्राह विष्णुमेन त्रिविक्रमम ॥१॥[1]

ब्राह्मणयुग विष्णोमहत्त्वमत्यधिकमवद्धत । ऋत्विजावर्गेष्य सर्वाधिक । एतरेय ब्राह्मणेऽग्निरवम कथिनो विष्णुश्च श्रेष्ठ तथा च—

अग्निर्वै देवानामवम विष्णु परम तदन्तरेण सर्वा अन्य देवता ।[2]

अत्र विष्णो पदत्रयस्य सम्बन्ध स्पष्टत पृथिव्यन्तरिक्षाकाश सह स्थापित । विष्णुमहीमसुरेभ्योऽहृत्य इन्द्रायापयन । एकस्मिन्कालेऽविभाजने इन्द्रविष्णू असुर सहायुध्यनाम् । तत्रासुरा प्रोचुर्यावन्ती पृथिवी विष्णु स्वत्रिभि पद-क्रममर्मान् गवनाति तावतीन्द्राय दया । तत्र विष्णुस्त्रिभि पद मव जगतस्वायत्त चकार । तथा च— इन्द्रश्चविष्णुश्चासुरैर्युयुधाते ताह जित्वोचतु कल्पावहै त इनथत्यसुरा उचु सोऽब्रवीदिन्द्रो यावदेवाय विष्णु त्रिविक्रमततावता वस्मान्क युष्मावमितरत इति स इमान लोकान विचक्रमेऽथो वेदान अथोवाचम् ।[3] वामनावतारातिरिक्त वाराहाद्यवताराणामपि तत्रैव निर्देश । शतपथब्राह्मणे १४।१।२।११। तैत्तरीये ७।१।५।१। ऋग्वेदे च—

विश्वेत्तता विष्णुराभरादुरुक्रमस्त्वेषित ।
शतमहिषान क्षीरणाकमोदन वराहमिन्द्र एषाम ॥१॥[4]

जगति यत्किञ्चित्तत्सर्वमीशावास्यम तथा चेशोपनिषदि—

ईशावास्यमिद सर्व, यत् किञ्च जगत्या जगत् ।
तेनत्यक्तेन भुञ्जीथा मागृध कस्यस्विद् धनम् ॥१॥[5]

तत्रैव प्रकारान्तरेण कृष्णावतारस्यापि सङ्केत । तथा चक संहितायाम—

अय वा कृष्णो अश्विना ह्वत वाजिनी वसू ।
तथा शृणुत जमितुहव कृष्णस्य स्तुवता नर ॥१॥[6]

छान्दोग्य च—तद्धैतत घोर आंगिरस कृष्णाय देवकीपुत्राय प्रोक्त्वा ॥[7]

गीतायामपि भगवान् कृष्ण स्वविभूतिवर्णने ।

'आदित्यानामहविष्णुरित्यवोचत'[8] विष्णोरवमयात पृथव्यपतेजो

---

१ वृहद्देवतायाम् ८।६४
२ एतरेय ब्राह्मणे १।१
३ तत्रैव ८।१५
४ ऋग्वेदे ८।७७।१
५ ईशावस्योपनिषदि १।१
६ ऋकसंहितायाम ८।८६ ५
७ छान्दोग्योपनिषदि ८।१७।६ अष्टाविंशत्युपनिषदि १९६५, वाराणसी, पृ० १०१
८ गीतायाम् १०।२१

शतपथे च—

अग्निर्वैसदेव तस्यतानि नामानि शर्व इति यथा प्राच्या आचक्षत भव इति यथा वाहीका, पशूनापति रुद्रोऽग्निरिति तान्यस्याशान्तानि एवतराणि नामानि। अग्निरित्येव।[1]

यथा रुद्रोऽग्ने प्रतिनिधिरेवमेवविष्णु सोमस्य प्रतिनिधि सोमश्च जगत पोषकतत्त्व। अयमेव चन्द्र। औषधीनामधिप सोमरसोऽग्नौ हूयते। अना अस्यैव सोमस्य रस पीत्वा परमानन्दमविन्दन्।

अपमा सोमममृता अभूमागन्मज्योतिरविदामदेवान।
किं नूनमस्मान् कृणवदराति, किं धूर्तिरमृत मर्त्यस्य॥[2]

सोम एव स्वसुधारश्मिभिरोषधी पुष्णाति। वदिकपयस्त प्रार्थयन्ते यथा पिता पुत्रे दयालुस्तथा स दयालुर्भवेत।

शम्भो भवहृदय आपीत इन्द्रो, पितेव सोमसूनवे सुशेव।
सुखेव सख्यउरुशसधीर, प्राण आयुर्जीवसे सोमतारी॥१॥[3]

विश्वस्मिन्पोषकतत्त्वरूप सोमोभगवान विष्णुश्च तस्य प्रतिनिधि। पोषकतत्त्व स्वरूपमपि वहमान शरीरस्यापृणोति इदमेव वामनरूप। सोमस्य सम्बन्ध सूर्येण। सौर प्रभासेनव स प्रकाशत चन्द्र। अतस्तत्प्रतीकस्य विष्णोरपि सूर्येणक्य जानन्ति जना। तथा च कालिदास —विक्रमोर्वशीये—

रविमावसत सता नियाय, सुधारश्मि तपयतसुरानपितृ श्च।
तमसा निशिमूर्च्छितानि हन्ते हरचूडानिहितात्मने नमस्ते॥१॥[4]

भारतीय-सस्कृतौपरमाधत एकत्वेऽप्यनकत्वम अनेकत्व चकत्व सवत्र दृश्यत। तथा च विष्णु-सूर्ययोरत्र पार्थक्य च घटते। त्रिविक्रम त्रिपदक्रमणा दिशोन्त सूर्यसम्बन्धं तथवविष्णोर्व्यापकत्वे नातिदुर्घटा इति। गीतायामपि—

आदित्यानामहविष्णु ज्योतिषा रविशुमान।[5]

एव चास्य सूयात्मोकत्व वदिक स्वरूप च स्फुटम।

## पौराणिक स्वरूपम्—(स्तोत्रात्मकम्)

पुराण-कालमागत्यविष्णुरधिकमान्यता प्राप। अष्टादश-पुराणेषु प्रायो ऽद्धविष्णु परम। मत्स्यकूर्मनृसिंह-वाराहादीनि तु तन्नाम्नैवाख्यानानि। भगवतो विष्णो सगुणनिर्गुणभेदेन रूपद्वयम। त्रिविधगुण-साम्यर्येणव एव विष्णुब्रह्मादि

---

१ शतपथ १।७।३।८
२ ऋक्संहितायाम् ८।४८।३
३ तत्रैव ८।४८।४
४ विक्रमोर्वशीये ३।७
५ भगवद्गीतायाम् १०।२१

मज्ञा भजते। तथा च विष्णु-पुराणे—

सृष्टिस्थित्यन्तकालेषु त्रिधवसम्प्रवतत ।
गुणप्रवत्यापरम, पद तस्यागुण महत ॥१॥[१]

परमात्मन इद रूप नानमय स्वसम्वेद्य स्वप्रकाशात्मक चास्ति। अयच्च रूपमूत तथा च गीतायाम्—

द्वाविमौपुरुषौ लोके, क्षरश्चाक्षर एव च।
क्षर सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ॥१॥[२]

विष्णुरेवब्रह्मणस्तस्य अस्वरूपमयो मूतस्वरूपमयश्चास्ति।[३] समस्तमिद दृश्यमान भौतिक प्रपच विष्णुनवोतप्रोतम। विष्णौ चौतप्रोतम। तथा च विष्णु पुराणे—

तत्र सवमिद प्रोतमोत, चाखिल जगत।
ततो जगत जगत तस्मिन स जगच्चाखिलमुन ॥[४]

समेषा समीक्षकाणाम् दशनानाम् नयथाश्च मतेऽत्र भगवदतिरिक्त किंचिन्नास्ति। स एव सवत्र किन्तु माया जवनिका छन्ननदृश्यते तथा च विष्णु पुराणे—

अह हरि सवमिद जनाद्दनो, नान्यत्तत कारण-काय जातम।
इदृङमनोयस्य न तस्य भूयो, भवोद्भवा द्वन्द्वगता भवन्ति ॥१॥[५]

तात्त्विक-दृष्टयक विष्णुरेव सृष्टे प्राक्ब्रह्मरूपेण अवातिष्ठत। सदा कायकारण भावोनासीत। तत प्रपचात्मक जगत जातम। तथा च श्रीमद भागवते—

अहमेवासमग्र नान्यद यत्सदसत परम।
पश्चादह यदेतच्च योऽवशिष्येत्सोऽस्म्यहम ॥[६]

भगवताविष्णो पदमपरिच्छिन्न कालातीतमनिवचनीय तत्र श्रुतयोऽपि नेति नेतीति प्रणिगदन्त्योऽवतिष्ठन्ते। दौरात्म्य विसृज्यैव केचितजना अनन्येन मन्त्रयेण चक्षुपा तत्पश्यन्ति। तथा च भागवते—

पर पद वष्णवमामनन्ति यत यन्नेति नेतीत्यतदुत्सिसृक्षव ।
विसृज्यदौरात्म्यमनन्यसौहृदा हृदोपगुह्याहपद पद पदे ॥१॥[७]

---

१ विष्णुपुराण १।२।४१
२ गीतायाम् १५।१६
३ विष्णुपुराणे १।२२।५५ ५६
४ तत्रव १।२२।६४
५ तत्रव १।२२।८७
६ श्रीमद्भागवत २।९।१३
७ तत्रव २।२।१८

तत्रव च स्वयम्भगवन्देवकी प्राह तथा च—

रूप यत्तत्प्राहुर्व्यक्तमाद्य ब्रह्मज्योतिनिर्गुणनिर्विकार ।
सत्तामात्रनिर्विशेषनिरीहस त्व, साक्षातविष्णुरध्यात्मदीप ॥[1]

कूर्मे च— रजोगुणमयचान्यरूप, तस्यव धीमत ।
चतुमुख स भगवान, जगत्सृष्टौ प्रवतते ॥१॥
सृष्टश्चपातिसवस, विश्वात्मा विश्वतामुख ।
सत्वगुणमुपाश्रित्य, विष्णुविश्वेश्वर स्वयम् ॥२॥
तमोगुण समाश्रित्य रुद्र सहरते जगत ।
एकोऽपि स महादेव, स्त्रिधासौ परिकीर्तित ॥३॥[2]

विष्णुपुराणे च—

ज्योतीपि विष्णुभुवनानिविष्णु वनानिविष्णुगिरयादिशश्च ।
नद्य समुद्राश्च सएव सव यऽस्ति यन्नास्ति च विप्रवय ॥२॥[1]
तान्यवतऽमिरूपाणि रूपाणि भगवस्तव ।
यानि यानि च रोचन्त स्वजनानामरूपिण ॥[2]

भक्तवत्सलोभगवान्भक्तेच्छया रूपविदधाति । येन रूपेण द्रष्टुमीहते भक्तिमागजनस्तदेवास्य रूप तथा च भागवत ।

त्व भावयोगपरिभावित हृत्सरोज , आस्से श्रुतेक्षितपथो ननु नाथपुसाम् ।
यद्यद्धियात उरगायविभावयन्ति, तद तद वपु प्रणयस सदनुग्रहाय ॥१॥[3]

श्रीमदभागवतस्यानुशीलनेन प्रतीयत यदभगवतो रूपत्रयी एक स्वय रूप द्वितीय तदेकात्मरूप तृतीयमावेशरूप तत्रस्वयरूप मुख्यरूपमिद चानपेक्षितम् । सच्चिदानन्दविग्रह परमसौन्दय निकेतन नयनाभिराम स्वयरूपम । तथा च भागवते—

गोप्यस्तप किमचरन यदमुष्यरूप, लावण्यसारमसमोर्ध्वमनन्यसिद्धम ।
दृग्भि पिबन्त्यनुसवाभिनवदुरापम एकान्तधाम यशस श्रियऐश्वरस्य ॥१॥[4]

लघुभागवतामृत— अनेकमप्रकटता, रूपस्यकस्यकत्वम ।
सवथा तत्स्वरूपेच सप्रकाशइतीयते ॥१॥[5]

तदेकात्मरूप च—

---

१ श्रीमद्भागवत १।३।२४
२ कूर्मपुराण ४।५ ५३
३ विष्णुपुराण २।१२ ३८
४ भागवते ३।२४।३१
५ तत्रैव ३।८।११
६ तत्रैव १।४४।१४
७ लघुभागवामृते, पृ० १३

इद रूप तस्मान्भिन्नत्वे भिन्नमिव प्रतीयते द्विधा चेद विलासात्मक स्वाभाविकं चेति। विलासात्मके न्यूनता स्यात् च न स्वयं रूप ६४ गुणा । आवेशरूप—

ज्ञानशक्त्यादीना विभाग, कृत्वाभगवान्यन रूपण ।
जीवेषु प्राविष्टो भवति, यथा पृथुष्ठे नारदसनत्कुमाराद्यं ॥[1]

भगवान् विष्णुरेव भूतात्मेन्द्रियात्मा प्रधानात्मा परमात्मा पञ्च रूपेष्व स्थित । स एवाक्षरोऽक्षरश्च । ब्रह्मविष्णु शिवादिकल्पनास्थित । कृष्णाच्युतानन्तनामभिरेव एव सम्पूज्यते । समस्त जगत स एव । विभिन्न शक्तिभिस्स एव विश्वस्य रक्षा करोति । तथा च विष्णु पुराणीयस्तोत्रे—

भूतात्मा चेन्द्रियात्मा च प्रधानात्मा तथा भवान ।
आत्मा च परमात्मा च, त्वमेक पचधास्थित ॥१॥
प्रसीद सव सर्वात्मन् क्षराक्षरमयेश्वर
ब्रह्म विष्णु शिवाख्याभि कल्पनाभिरुदीरित ॥२॥
अनाख्येय-स्वरूपात्मन्, अनाख्येय प्रयोजन ।
अनाख्येयाभिधान त्वा, नतोऽस्मि परमेश्वर ॥३॥
न यत्र नाथ विद्यन्ते नाम-जात्यादि-कल्पना ।
तदब्रह्म परम नित्य, मविकारि भवानज ॥४॥
नकल्पनामृतेऽस्य, सवस्याधिगमोयत ।
तत कृष्णाच्युतानन्त विष्णु-सज्ञाभिरीड्यते ॥५॥
सर्वार्थास्त्वमजविकल्पनाभिरेवतत्
देवाद्यजगदखिल त्वमेवविश्वम् ।
विश्वात्मस्त्वमसि विकार-भावहीन
सर्वस्मिन्नास्ति भवतोऽस्ति न किंचिदन्यत ॥६॥
त्व ब्रह्मा पशुपतिरर्यमा विधाता,
धातात्व त्रिदशपति समीरणोऽग्नि ।
तोयेशो धनपतिरन्तकस्त्वमेको,
भिन्नार्थैर्जगदपि पासि शक्ति भेद ॥७॥[2]

घनश्यामोभुजगशायी कमलनयनो लक्ष्मीपतिश्च—

शान्ताकार भुजगशयम पद्म-नाभ सुरेशम्,
विश्वाधार गगनसदृश मेघवर्ण शुभाङ्गम् ।

---

१ महामहोपाध्याय प गोपीनाथ कविराजस्य लेख, कल्याण भाग १६ अंके ४ तथा ८
२ विष्णुपुराण (स्तोत्रे) श्रीधरानन्द कलकत्ता १।१।५० ५६ तथा वायुपुराण ५० ५४

लक्ष्मी-कान्त कमलनयन योगिभिर्ध्यानगम्यम
वन्देविष्णु भवभयहर सर्वलोकनाथम् ॥१॥[1]

अस्य विविधामूर्तय सगुणनिर्गुणादय । धीमदिम ज्वालावत्ताशुक्ला मूर्ति दृश्यत । सा दूरस्था निरन्तस्याचानासक्तद्रष्टुमर्हा । नाम रूपादिभिभिन्ना कल्पनामात्र वगम्या । शुद्धा तथा च ब्रह्म-पुराणे—

स देवो भगवान्सर्व, व्याप्य नारायणोविभु ।
चतुर्धा सस्थितो ब्रह्मा सगुणोनिर्गुणस्तथा ॥१॥
एकामूर्तिरनुद्देश्या शुक्ला पश्यन्तितावुधा ।
ज्वाला-मालानवद्यागो, निष्ठा सा योगिनापरा ॥२॥
दूरस्था चान्तिकस्था च विज्ञेया सा गुणातिगा ।
वासुदेवाभिधानासो, निर्ममत्वेन दृश्यते ॥३॥
रूपमावादयस्तस्या न भावकल्पनामया ।
भारते च सा सदाशुद्धा, सुप्रतिष्ठरूपिणी ॥४॥
द्वितीयापृथिवीमूर्ध्ना, शेषाख्या धारयत्यध ।
तामसी सा समाख्याता, तिर्यक्त्व समुपागता ॥५॥
तृतीया कर्म कुरुत प्रजा पालन-तत्परा ।
सत्त्वोद्रिक्ता च सा नेया धर्म सस्थान-कारिणी ॥६॥
चतुर्थी जलमध्यस्था, शेते पन्नगतल्पगा ।
रजस्तस्या गुण सर्ग सा करोति सदर्वाह ॥७॥
या तृतीया हरे मूर्ति प्रजापालनतत्परा ।
सा तु धर्मव्यवस्थान, करोति नियत भुवि ॥८॥
प्रोद्धतानसुरा हन्ति धर्म व्युच्छित्तिकारिण ।
पातिदेवा सर्ग धर्मान धर्मरक्षा-परायणान ॥९॥[2]

भगवतोऽस्त्राणि शख चक्र-गदा पदमानि तथाचामरकोशे—

शखो लक्ष्मीपते पाचजन्य चक्र सुदर्शनम ।
कौमोदकीगदाखडगोनन्दक कौस्तुभामणि ॥१॥[3]

गरुड-पुराणे च—

गरुत्मोम्वुजमवाशो गदा चक्रामिताकृति ।
पुष्टि शिरीषपुष्पाभा लक्ष्मी काचनसंनिभा ॥१॥

---

१ प्रसिद्ध श्लोक ध्यानात्मक
१ ब्रह्मपुराण आनन्दाश्रम पूना अ १८ ।१७ २६
२ अमरकोश मन्न प्रसाद शास्त्री १९५०, १।१।२८

चक्र सूयसहस्राभ,[1] श्रीवत्स कु दसनिभ ।
विद्युद्रूपाणि चास्त्राणि, यानिचोक्तानिवणता ॥२॥[1]

भागवत च—सुदशन च पाच ाय गदासीषुधनुर्हलान ।
मुसलकौस्तुभ माला श्रीवत्सचानुपूजयत ॥३॥[2]

मगवा विष्णुश्चतुभुज वयथतस्य बाहवश्चतुर्दिश प्रतीकरूपा । शखो-धाचाम पद्म-ब्रह्मणश्चत्र रक्षाशक्त गदा सहार शक्तश्च ।

चेतनाया विस्तारेस्य स्थान नाभिर्वि दुस्त सृष्टिपदमनालमुदभवति । ब्रह्माचातएवोद्भवति तथा च योगशास्त्रे स

सिसृक्षया ततोनाभेस्तस्य, पदम विनिययौ ।
तन्नाल हेमनलिन ब्रह्मणालोकमदमुतम ॥१॥
तत्त्वानिपूवरूपाणि कारणानि परस्परम ।
समवायप्रयोगाच्च विभि नानि पृथक पृथक ॥२॥
चिच्छक्त्य पूज्यमानोऽय मगवानादि पुरुष ।
याजय मायया देवी योगनिद्रामकल्पयत ॥३॥
योजयित्वा तथा चव प्रविवेश स्वय गुहाम ।
गुहा प्रविष्ट तस्मिस्तु जीवात्मा प्रतिबुद्ध्यते ॥४॥
स नित्यो नित्यसम्बद्ध प्रकृतिश्च परव सा ।
एवसवात्मिसम्ब धे, ना य पदम हरेरभूत ॥५॥
तत्र ब्रह्माभवदभूय चतुर्वेदश्चतुमुख ।[3]

सिसृक्षोर्विष्णो नाभे पद्माभूत तस्य नाले स्वण कमलमुदभूतम । अथ ब्रह्मलोक । समवाय प्रयोगाद भि न ।

मगवानादि पुरुष चिच्छक्तया मायामाश्रित्य योग निद्रामकल्पयत । तदाश्रित्य गुहा च प्रविष्टस्तदात्मा जीवात्मोदबुद्ध परा प्रकृति रूपा । हरनाभित पदमाभवत । चत्वार्ययस्त्राणि त्रिगुणात्मक शक्तीना प्रतीकानि । तथा च स्क द पुराणे—

शानाहकारस्वय शा ङ्ग्राह्मसिकेशव ।
च द्रपदमगदाशख परिणामानिधारयन ॥१॥[4]

उपनिषत्स्वायुध तत्त्वाना वणनानीत्थम ।

श्रीवत्सस्य स्वरूप तु वतत लाञ्छन सह ।
श्रीवत्सलक्षण तस्मात्कथयते ब्रह्म वादिभि ॥१॥

१ गरुडपुराण १।४१।४२ पण्डित पुस्तकालय काशी १९६३
२ भागवते ११।२७।२७
३ योगशास्त्र ब्रह्म सहितायां (वसुमती प्र० स० कलकत्ता बगाल) प० ३११ श्लो० १८ २०
४ स्क दपुराणे विष्णुखण्डे १०।३२

येन सूर्याग्निवाकचन्द्र, तेजसास्वस्वरूपिणा ।
वततकौस्तुभाख्यमणि वदन्तीशममाग्नि ॥२॥
सत्व रजस्तम इति, अहङ्कारश्चतुर्भुज ।
पचभूतात्मक शङ्ख करेरजसि सस्थितम ॥३॥
वालस्वरूपमत्यन्त मनश्चक्र निगद्यत ।
आद्या माया भवच्चात्र, पद्म विश्वकरेस्थितम ॥४॥
आद्याविद्यागदा वदया, सर्वदा मकरेस्थिता ।
धर्माथकामकयूरर्दिव्यैर्दिव्यमयरित ॥५॥
कण्ठ तुनिगुण प्रोक्त मात्यन्त आद्ययायया ।
मालानिगद्यत ब्रह्म, स्तव पुनस्तु मानस ॥६॥
कूटस्थ सत्त्व रूपच, किरीट प्रवदन्ति माम् ।
क्षरोत्तर प्रस्फुरन्त कुण्डलयुगल स्मृतम ॥७॥[1]

विष्णोर्ग्रीवाया वजयन्तीमाला च भूत सघातभूता तथा च विष्णु पुराणे—

पचरूपा तु या माला वजयन्ती गदाभृत ।
साभूत हेतुसघातभूत माला च व द्विज ॥१॥[2]

राधातन्त्रेऽपि—

तथा च—

नानारत्नमयी माला, विद्युत्कोटिसमप्रभा ।
पचाशन्मातृकावर्णा, सहिताविश्व मोहिनी ॥१॥[3]

विष्णोर्वाहनो गरुडश्च वेदाना प्रतीक रूप तथा—

गरुडो भगवास्तत्र स्तोत्रछन्दोमय वपु ॥

शेषशय्यायां भगवान्योग निद्रामाश्रित्य शेते । शेषश्च सहस्रमूर्धा । य पृथिवी धतान्यशेष काल प्रतीक ।

त्वया धतय धरणी बिभर्ति चराचर विश्वमनन्तमूर्ते ।
कृतादिभेदरजकालरूपा निमषपूर्व जगदतदत्सि ॥१॥[4]

एव च पुराणादि वर्णिता भगवान्विष्णु प्रतीकरूप निर्गुण सगुणश्चेति ।

कालिदासोऽपि—

रत्नच्छाया-व्यतिकर इव प्रेक्ष्यमेतत्पुरस्तात
वल्मीकाग्रात्प्रभवति धनु खण्डमाखण्डलस्य ।

---

१ गोपालोत्तरतापिन्युपनिषदि २२ २८
२ विष्णुपुराण २।२२।७
३ नारायणवर्म स्तोत्रे २६
४ विष्णुस्तोत्र (विष्णुपुराण) ६।६।२६

येन श्याम वपुरतितरां कान्तिमापत्स्यते ते ।
बर्हेणेव स्फुरितरुचिना गोपवेषस्य विष्णोः ॥[१]

मन्त्रगायत्र्यादीनि—

भगवतो विष्णोर्गायत्र्यो विभिन्नरूपेण यत्र तत्र वर्तन्ते तथा च महानारायणोपनिषदि—

१ नारायणाय विद्महे वासुदेवाय धीमहि तन्नो विष्णुः प्रचोदयात्[२] (नारायणगायत्री)।

२ वज्रनखाय विद्महे तीक्ष्णदंष्ट्राय धीमहि तन्नो नारसिंहः प्रचोदयात्[३] (नृसिंहगायत्री)

३ नृसिंह पूर्वतापिन्याम्— ओं नृसिंहाय विद्महे वज्रनखाय धीमहि तन्नः नृसिंहः प्रचोदयात्।[४]

४ तैत्तरीये प्रथमाक्षरमस्तथैव।[५]

५ तन्त्रसारे—

ओम् त्रैलोक्य मोहनाय विद्महे स्मराय धीमहि तन्नो विष्णुः प्रचोदयात्[६] प्रथमोऽपि पूर्ववत्।

६ ओम् वागीश्वराय विद्महे हयग्रीवाय धीमहि तन्नो विष्णुः प्रचोदयात्।[७]

७ ओम् कृष्णाय विद्महे दामोदराय धीमहि तन्नो विष्णुः प्रचोदयात्।[८]

८ ओम् दाशरथाय विद्महे सीतावल्लभाय धीमहि तन्नो रामः प्रचोदयात्।[९]

## विशिष्ट-स्तोत्राणि

### १ कृष्णकवचम्

मताऽत्र श्रीकृष्णस्य वर्णनम् त्रैलोक्यविजयमिति नामान्तरं[१०] तथा च '*त्रैलोक्य विजयं नाम श्रीकृष्णस्य जयावहम्*' पुष्पिकायां च—

१ मेघदूत १।१५
२ म०नारायणोपनिषदि १।५१
३ तत्रैव २१।२
४ नृसिंहपूर्वतापिन्युपनिषदि उ० १।१३
५ तैत्तरीयारण्यके १० प्र०
६ तन्त्रसारे, पृ० ६८
७-९ तत्रैव
१० ब्रह्मपुराण ३।३१।८

"इति श्रीब्रह्ममहापुराणे गणपति-खण्डे नारदनारायण-सम्वादे परशुरामाय कृष्ण कवच प्रदान नाम एकत्रिंशाध्याय ।[1]

ब्रह्मवर्ते ३ य खण्डे ३१ तमेऽध्याय ७म श्लोकमारभ्य ५७ तम यावत । श्लोका ८० महादेव परशुराम प्राह ।

कवचस्यास्य धारणेन राजसूयसहस्राणा वाजपेयशतस्य च नरमेधायुतानां महादानानां भूमे प्रदक्षिणस्य च फलानि षोडशी-कला नार्हन्ति । व्रतोपवास-स्वाध्यायादि जय फल लभन्ते नर । अस्यैव प्रभावेण परशुराम त्रिसप्तकृत्वः नृपान जघान । तथा चाम्नम् ।

राजसूय सहस्राणि, वाजपेय शतानि च
अश्वमेधायुतान्येव, नरमेधायुतानि च ॥१॥
महादानानि यान्येव प्रादक्षिण्यमण तथा।
कलापय विजयस्यास्य, कला नार्हन्ति षोडशी ॥२॥
व्रतोपवासनियम स्वाध्यायाध्ययनेतप ।
स्नान च सर्वतीर्थेषु नास्यार्हति कलामपि ॥२॥[2]

आदावत्र माहात्म्य प्रदर्शित ततो विनियोगो मन्त्र अगन्यास करन्यासौ दिग्रक्षण च । सरला भाषा गायत्री छन्द ।[3]

## २ कृष्णस्तोत्रराज

सूच्यामिन्मवनाम[4] श्रीकृष्ण-स्तोत्रषु शिरामणीयमानत्वादस्यैव सना । पुराणेऽप्यनेनैव नाम्ना निर्देश । स्तवराजमिमनित्य ब्रह्म न्द्रधर्मम् कृतम्[5] पुष्पिकाया च—

'इति श्री ब्रह्मवर्ते महा पुराणे श्री कृष्णजन्मखण्ड गोलोकवर्णने श्री कृष्ण स्तोत्र राजपठन नाम पचमोऽध्याय ।'[6]

ब्रह्मवर्ते ४र्थाध्याय ६३ तम श्लोकमारभ्य १२६ तम यावत । श्लोक सख्या ३४ । पापभरपीडितया धरया प्रार्थिताना ब्रह्मादि देवाना स्तोत्रान्ते हरि प्रादुर्बभूव । तत पुन ब्रह्मादि देवा स्तोत्रमकार्षु ।

स्तोत्रस्यास्य पाठेन नरो निश्चला मति लभते । सुरासुरमुनीन्द्रदुर्लभ भगवद्दास्य मणिमादिक सिद्धीश्च लभते । चिरकालीना कीर्तिश्च तस्य भवति ।

---

१ तत्रैवाध्यायान्ते
२ ब्रह्मपुराणे ३।३१।५ ४२
३ तत्रैव ३।३१।२२ ५
४ ब्रह्मवर्ते ४ १
५ तत्रैव ४।५।१२१
६ तत्रैव १० २१

तथा चोक्तम्—

पूजाकाले हरेरेव भक्तियुक्तश्च यः पठेत् ।
सुदुर्लभां दृढां भक्तिं निश्चलां लभते हरौ ॥१॥

सुरासुरमुनीन्द्राणां दुर्लभं दास्यमेव च ।
अणिमादिक सिद्धिं च सालोक्यादि चतुष्टयम् ॥२॥

इहैव विष्णुतुल्यश्च विख्यातः पूजितो ध्रुवम् ।
तापसिद्धिमन्त्र सिद्धिश्च भवत्सस्यमुनिर्चितम् ॥३॥[1]

सानुप्रास-सप्रसाद सरलया भाषया भाषितमिदस्तोत्र भवितव्यस्यच्छा मयज्योति स्वरूपमत्रवर्णितम्। ईश्वर सर्वाधारोऽपि निराधार ।

३ गजेन्द्र कृत विष्णु स्तोत्रम

विष्णोर्भगवत स्तोत्रस्य गजेन्द्रेण कृतत्वात्तन्व नाम ।[2] पुराणेषु गजेन्द्र मोक्षतिनाम्ना प्रसिद्ध तथा च पुष्पिकायाम —

'इतिश्रीमद्भागवत महापुराण पारमहस्या संहितायामष्टमस्कन्धे गजेन्द्र मोक्षणे तृतीयोऽध्याय ।[3]

भागवत महापुराणे ८म स्कन्ध ३य ध्याय २य श्लोकात २९ तम यावत श्लोक-सख्या २८ । स्तोत्र-कर्तग्राहग्रस्तो गजेन्द्र पुन-कथन चतुर्थोऽध्याय १५ १६ श्लोकयोरिति ।

स्तोत्रस्यास्य पाठेन विमलामतिर्भवति । पाप पुज च प्रणश्यति । तथा च तत्रैव—

उत्थायापररात्रान्ते प्रयता सुसमहिता ।
स्मरन्ति मम रूपाणि, मुच्यन्ते ह्यनसोऽखिलात ॥१॥

ये मां स्तुवन्त्यनेनाग, प्रतिबुध्य निशात्यये ।
तेषां प्राणात्यये चाहं, ददामि विमलां मतिम् ॥२॥[4]

भगवान्स्वमायया त्रिगुणात्मके जगति स्वेच्छोपात्तवपुस्तिरोधत्ते । स्वच्छया विर्मति च । न केऽपि देवषयो मुनयो महर्षयो वा त ज्ञातु पारयन्ति । नटइव विविधचर्या करोति । अकारणोऽपि स कारण । आशावद्धदुराप । तथा च—

---

१ ब्रह्मवैवर्ते ४।३।१२२ १२४
२ श्रीमद्भागवते प ३९१ मूलमात्र गीताप्रेस गोरखपुर
३ तत्रैव ३९२
४ श्रीमद्भागवते ८।४।२४ २५

आत्मजाप्तगृहवित्तजनेषु सक्तैर्दुष्प्रापणाय गुण-सङ्गविवर्जिताय ।
मुक्तात्मभिः स्वहृदये परिभाविताय ज्ञानात्मने भगवते नम ईश्वराय ॥१॥[1]
भाषा सरला सानुप्रासा समास-बहुला ।[2]

४ गोविन्दाष्टकम्

गोविन्दस्य भगवतः स्तोत्रे श्लोकानामष्टकत्वात् नवमस्य च फलकथनपरत्वात्तदेव नाम ।[3] पुष्पिकाया च

इति श्रीमत्परमहंस परिव्राजकाचार्यस्य श्रीगोविन्दभगवत्पूज्यपाद शिष्यस्य श्रीमच्छंकरभगवतः कृतौ गोविन्दाष्टकं सम्पूर्णम् ।[4]

आचार्य शंकर-कृतमिदमत्र ज्ञातव्यम् ।

स्तोत्रस्यास्य पाठेन गोविन्दार्पित-चेता नरः धौताखिलाघो निजस्वान्ते परमानन्दामृतं गोविन्दमभ्युपैति । तथा च—

गोविन्दाष्टकमेतदधीते गोविन्दार्पितचेता यो ।
गोविन्दाङ्घ्रिसरोजध्यान सुधाजलधौतसमस्ताघो ।
गोविन्दाच्युतमाधव विष्णोगोकुल-नायकष्णेति ।
गोविन्द परमानन्दामृतमन्तस्थं स तमभ्युपैति ॥१॥[5]

अत्र निर्गुणाद्वैतात्मनि गोविन्दस्य चर्चा । यः सत्यज्ञानमनन्तं ब्रह्म माया-कल्पित-नानाकारानाकारभुवना-कारः । यश्च मातृ मत्साक्षी यशोदाताडितो व्यादितवक्त्रः दर्शितालोकचतुर्दशलोकः । भयपूरितः लोकस्तम्भश्च तथा च तत्रैव—

मृत्स्नामत्सीहेतियशोदाताडन - शैशव-सन्त्रासम् ।
व्यादितवक्त्रालोकितलोकालोक चतुर्दश-लोकम् ।
मायाकल्पित नानाकारमनाकारं भुवनाकारम् ।
क्ष्मानाथमनाथं प्रणमत गोविन्दं परमानन्दम् ॥१॥[6]

अत्र भाषा सरला सप्रसादा सानुप्रासा दीर्घसमासा ।

५ नरसिंह स्तोत्रम्

यतोऽत्र नरसिंहस्य भगवतो महिम प्रतिपादनम् । अतस्तदेव नाम ।

---

१ श्रीमद्भागवते ८।५।१८
२ तत्रैव ८।५।५
३ श्रीशंकरग्रन्थावल्याम् पृ ३६४ बृहत्स्तोत्ररत्नाकरे काशी संस्करण पृ २१५
४ तत्रैव स्तोत्रान्ते
५ श्रीशंकरग्रन्थावल्याम् श्लोक ६
६ तत्रैव, श्लोक २

स्तोत्रेणानेन भगवान्नरसिंह स्तुत ।

देवीभागवते ८म स्कन्धे नवमाध्याये ३य श्लोकमारभ्य ६ यावत । श्लोकाना सप्तकम । स्तोत्रमिदम हरिवर्षे भक्त शिरोमणि प्रह्लाद कृतवान । स्तोत्रस्यास्य पाठेन सर्वविघ्नशमन भवति । यतश्चात्र विघ्नमयजगत परित्यज्य नृसिंह चरणोपासना श्रेयस्करीत्युक्तम् । तथा च तत्रैव—

तस्माद्रजो राग विषादमन्युमान स्पृहा भयदैन्याधिमूलम
हित्वा गृह संसृतिचक्रवालम नृसिंहपाद भजताकुतोभयम ॥१॥[1]

तान्त्रिकमतेऽत्र भगवता नृसिंहेन प्रह्लादो निर्भय कृत सरलयागिरा नृसिंहगौरव प्रतिपादितम् । स च तेजस्विना तेजस्वी वज्रदंष्ट्रा कर्माशयनाशक । भवभीतो यस्य स्मरणेन क्षय यान्ति । रजोरागविषादम युमादीनि परिहरणी यानि । तथा च तत्रैव—

ओम नमो भगवते नरसिंहाय नमस्तेजसतेजसे ।
आविराविर्भव वज्रदंष्ट्र कर्माशयान्रन्धय रन्धय
तमो ग्रस ग्रस ओ स्वाहा ॥१॥[2]

## ६ पुण्डरीकाक्ष स्तोत्रम

सूच्यामिदमवनामोपक्रम[3] च अथ पुण्डरीकाक्षस्तोत्र[4] स्तोत्रात सत्लम प्राप्त सराजा राज सत्तम[5] इति च ।

वाराहपुराणेऽष्टमेऽध्याये १०म श्लोकमारभ्य १८दश यावच्छलोका ८। प्रश्न कर्त्री धरित्री वक्ता वाराह । स्तोत्रान्त कश्मीरनरेशस्य वसार्मोक्ष प्राप्ति ।

स्तोत्रस्यास्य नित्य पाठेन पुष्करयात्राया यत फल प्राप्यते तत्प्राप्नोति । तथा च तत्रैव—

यश्चैतत्पुण्डरीकाक्ष पारग शृणुयान्नर ।
तस्य पुष्करयात्राया विधि स्नान फल लभेत ॥१॥[6]

सरल सप्रसाद सानुप्रास स्तोत्रेऽस्मिन पुण्डरीकाक्षस्य भगवत स्तवनम । स चात्र सर्वपापशोषनानाभोग तीक्ष्ण चक्री च कथितस्तथा च—

---

१ देवीभागवते ८।९।१ मनसुखराय मोर कनाइव रोड कलकत्ता १९६
२ तत्रैव ८।९।१०
३ वाराहपुराण प० १ खमराज श्रीकृष्णदास बाम्बे सम्वत १९९६
४ तत्रैव प० ५
५ तत्रैव ६।८
६ वाराहपुराण ६।१०

"नमस्त पुण्डरीकाक्ष नमस्ते मधुसूदन ।
नमस्त सवलोकेश, नमस्ते तिग्मचक्रिणे ॥१॥"[1]

अत्र कतिपय-नामभिभगवत स्तोत्र चतुर्थ्यन्त-नामभि सह नम पदम। भाषाप्रवाहमयी श्रुतपठितमात्रेण च बोध्या। भाव सव प्रसिद्ध। पौराणिकी चात्र शली। जनानन्ददायिनी। पुण्डरीकाक्षस्य प्रधानत्वेननाम निर्देश।

## ७ मुनिपत्नी कृत श्रीकृष्ण स्तोत्रम

यताहीद सान्दीपनमुनिपत्न्या कृत श्रीकृष्णस्य स्तोत्रम। पुष्पिकायां चेदमेव नाम। तथा च—

"इति ब्रह्मवैवर्ते महापुराणे श्रीकृष्ण जन्मखण्डे उत्तरार्द्धे नारायण-नारद सवादे मुनिपत्नी-स्तोत्रनामदयधिक शततमोऽध्याय ।[2]

ब्रह्मवैवर्ते १०२ येऽध्याये १७म श्लोकमारभ्य ३३तम श्लोक यावत। श्लोक सख्या १७ ।[3] श्रीकृष्ण स्वोपनयनानन्तर सान्दीपन मुने सकाशमध्येतु गत तदा मुनरनन्तर तत्पत्नी स्तोत्र चकार।

यो नर पुरायदमिद स्तोत्र पठति स श्रीकृष्णे निश्चला भक्ति लभते। मूर्ख पण्डितामवति। यावज्जीव सुख प्राप्यान्त हरेर्दास्य लभत तथा च तत्रैव—

इद स्तोत्र महापुराय य पठेत भक्ति-पूर्वकम् ॥१॥
श्रीकृष्णे निश्चला भक्ति लभते नात्र सशय।
अस्पष्टकीर्ति सुयशा मूर्खो भवति पण्डित ॥२॥
इहलोके सुख भुक्त्वा यात्यन्ते श्रीहरे पदम।
तत्रनित्य हरेर्दास्य लभत नात्र सशय ॥३॥[4]

अत्रान्ते मुनि-पत्नी श्रीकृष्णदर्शनेन स्वजन्म-साफल्य वर्णयामास। सा चा ब्रवीत यत् यावत्कृष्णस्य न भवति जन तावत्सुख नाधिगच्छति। गह कारागारम् शोकमोहादिबन्धनानि च तावत्व नर बद्ध सामर्थ्यवन्ति भवन्ति यावज्जन कृष्णस्य न जायत।[5]

## ८ रामगीता

रामेणगीतत्वाद्रामगीता।[6]

---

१ तत्रव ६।१४
२ ब्रह्मवैवर्ते पृ० २२८
३ तत्रव
४ तत्रव ४।१ २।३१ ३३
५ तत्रैव १७ २१
६ अध्यात्मरामायण प ६६८

अध्यात्मरामायणे उत्तरकाण्डे ५माध्याय १ श्लोकमारभ्य ६२ तम यावत श्लोका ६२ । रामो वक्ता लक्ष्मण श्रोता । उमामहादेव-सम्वाद रूपेण प्रसन्नयमिति ।

स्तोत्रमिद य श्रद्धया शृणोति स राम रूपमेति। तथा चोक्तमत्रव—
विज्ञानमेतदखिल श्रुति सारभत्तम् वेदान्त-वेद्यचरणेन मयाद्य गीतम ॥
य श्रद्धया परिपठेत् गुरुभक्ति-युक्त मद्रूपमेति यदि मद्वचनेषु भक्ति ॥१॥[1]

श्रान्तवयोपोद्घात रूपेण रामस्य पुरत उदारबुद्धेलक्ष्मणस्यानायासेन भव सन्तरणोपाय विषयक प्रश्नानाह।

अह प्रपन्नोऽस्मिपदाम्बुज प्रभो भवापवर्ग तवयोगमाश्रितम् ।
यथाञ्जसा ज्ञानमपारवारिधि, सुखतरिष्यामि तथानुशाधिमाम ॥१॥[2]

ततो भगवतो रामचन्द्रस्योत्तरे स्ववर्णाश्रमोचिता क्रिया कुर्वन्नर आत्मपदोपलब्धये गुरुमुपेयादिति कथितम् । मुराणाम, नित्यानि यत्नपूर्वक मैहिकानाम् स्वकचन्दनादिविषयभोगानामपरिहार कुर्यात । जगत मूलकारणम-ज्ञानमेवात ज्ञानमेवाश्रयेत । सदापि कर्मपरित्यजेत विद्यवाज्ञान विनाशने पटीयसी । तथा च—

नाज्ञानहीन न च राग-सक्षयो भवेत्तत कर्म सदोषमुद्भवेत ।
तत पुन ससतिरप्यवारिता तस्मादवुधो ज्ञानविचारवान्भवेत ॥१॥[3]

श्रुतिविहित कर्माकरणेऽपि दोष उक्तोऽतोविहित कर्मकार्यम सदोष त्यजेत । भेदापगम माया विलीयते सत्य ज्ञान च जायते । तत्त्वमस्यादि वेदान्त वाक्यानां सक्षिप्ततयागम्भीरयागिराऽर्थो विवेचित । आत्मा नक्षीयते नवधते । सवगतोऽयमद्वय तथा च—

"क्वदाचिदात्मा म्रियते नक्षीयते नापि विवर्धते नव ।
निरस्तसर्वातिशय सुखात्मक स्वयम्प्रभो सवगताऽयमद्वय ॥१॥[4]

भ्रमादनित्यनित्य बुद्धिजयित्वन्यमवाध्यास यथा रज्जौ सर्प । अभ्यासा देव निर्विकल्पे ब्रह्मणि ज्ञान जायते। समाधे पूवमजन्समारपश्यितयत । तथा च—

यद्यद्यत्र विभाव्यत भ्रमाद साध्यासमित्याहुरसु विपश्चित
असपभूतेऽहि विभावन यथा रज्ज्वादिक तद्वदपीश्वर जगति ॥१॥[5]

भव एव सवत्रादिमध्यान्तेषु दु खकहेतुरत समस्तमववादानत्यजेत ।

---

१ अध्यात्मरामायण ७।५।६२
२ तत्रव ७।५।६
३ तत्रव ७।५।१०
४ तत्रव ७।५।६५
५ तत्रव ७।५।३७

## ९ रामरक्षास्तोत्रम्

यतोऽत्र रामेण रक्षा वर्णिता। सूच्यामिदमेव नाम।[1] रामायणे च 'सर्वेय राम रक्षा त मयाख्यातेति।"[2]

अध्यात्मरामायण ५मे काण्डे ५मेऽध्याय ७म श्लोकमारभ्य ४५तम यावत। यावत। श्लोक-सख्या ३६। पुरा शम्भुनास्त्र दाय प्रोक्ताऽधुनारामदासो विष्णु-दास वक्ति।

प्रातरुत्थायास्य पाठेनापुत्र पुत्र लभते धनार्थी च धनमस्यश्रवणमात्रेण कस्यापि भय न जायते। बालग्रहशान्तिश्च जायतेऽत परतर स्तोत्र नास्ति। तथा च—

एतानि राम-नामानि प्रातरुत्थाय य पठेत।
अपुत्रो लभत पुत्र धनार्थी लभते धनम् ॥१॥
सर्वेय रामरक्षा त मयाख्याताऽतिपुरायदा
यस्या श्रवणमात्रेण कस्यापि न भय भवत ॥२॥
बालाना ग्रहशान्त्यर्थ जपनीया निरन्तरम्।
रामरक्षा महाश्रेष्ठा महाघौघ निवारिणी ॥३॥
नास्या परतर स्तोत्र, नास्या परतरोजप।
नास्या परतर किंचि त्सत्य सत्यवदाम्यहम् ॥४॥[3]

परमप्रसिद्धमिद स्तोत्र वैष्णवसम्प्रदायऽयत्र पृथक पृथक मुद्रितम। सकलितरूपेण चानेकत्र प्रकाशितम्। आदावत्रविनियोगस्तत फलकथनमेकैकमक्षर-मत्रस्य पुमामहापातक-नाशनम। ततोऽग यासकरन्यास दिग्रक्षणादिकम।

## १० रामसहस्रनाम

यतोऽत्र भगवतो रामच द्रस्य नाम्ना सहस्रवर्णन। सूच्या[4] स्तोत्रारम्भे फलकथनऽध्यायान्त पुष्पिकाया चेदमेव नाम। तथा च—

यथा शिष्य त्वया पृष्ट रामनाम-सहस्रकम्।[5]

इति श्री शतकोटि रामचरितान्तर्गत श्रीमदानन्द रामायणे राज्यकाण्डे पूर्वार्द्धे राम-सहस्र नाम कथन प्रथम सर्ग।[6]

---

१ अध्यात्मरामायणे प १२
२ तत्रैव ५।५।४८
३ तत्रैव ५।५।४१ ४२ ४ ५१
४ आनन्दरामायणे, प ७
५ तत्रैव प० ८२
६ तत्रैव पृ० ३६२

आनन्द रामायण पूर्वार्द्धे ७म काण्डे १मसर्गे २६ तम श्लोकमारभ्य १७५ तम यावत । महादेव पार्वतीमुवाच ।

फलञ्चास्य सर्वस्वय प्राप्ति स्तोत्रमिद सर्वेप्टद ब्रह्मघ्ना मद्यपी, गुरु तल्पगामी शरणागतघाती मित्र विश्वास घाती च मातृहा भ्रूणहापि वा सवत्सर जप्त्वा शुदध्यति । तथा च—

सहस्रनामफलद सर्वैश्वय प्रदायकम् ।
सर्वसिद्धिकर पुण्य भुक्तिमुक्तिफलप्रदम् ॥१॥
तावदेव बल तर्पा, महापातकदन्तिनाम् ।
यावन्नश्रूयते राम, नाम पचानन ध्वनि ॥२॥
ब्रह्मघ्नश्च सुरापश्च स्तयी च गुरु-तल्पग ।
शरणागत घाती च मित्रविश्वास घातक ॥३॥
मातृहापितहाचव भ्रूणहावीरहा तथा ।
कोटि-कोटि सहस्राणि ह्युपपापानि कृतानि च ॥४॥
सवत्सर क्रमाज्जप्त्वा प्रत्यहरामसन्निधौ ।
निष्कण्टक सुख भुक्त्वा ततो मोक्षमवाप्नुयात ॥५॥[1]

स्तोत्रमिद सवदेव सन्निधौ सुखासीन ससदि पार्वती शिव पृष्टवती । इदमेव गणेश सनत्कुमाराय प्रोवाच । स्वय चापि विघ्नराज भगवतो रामात लब्धवान । अत्रादौ विनियोगादिक ततोऽगन्यासकरन्यासादिकम ।

## ११ रामहृदयम्

सूच्चामिदमेवनाम ।[2] अत्र रामस्य हृदयमिव राजते । उपसहारे च—

एतत्तेऽभिहित देव श्रीराम हृदय मया ।[3]

अध्यात्म रामायण प्रथम काण्डे १मध्याय १०४ श्लोकमारभ्य ११७तम यावत । श्लोका १४ । महादेव पार्वती प्राह ।

स्तोत्रस्यास्य पाठेन नरोमुक्तोभवति न सन्देह । बहुजन्मार्जितानि ब्रह्म हत्यादि पापानि नश्यन्ति । जातिभ्रष्टो ति पापी परधनपरदारापसेवी स्तयी ब्रह्म घाती पितृवधरतोऽपि स्तोत्रस्यास्य पाठन विमुक्त पापो भवति ।

साक्षाद्रामेण कथित सववेदान्त-सग्रहम ।
य पठेत्सततभक्त्या स मुक्तो नात्र सशय ॥१॥
ब्रह्म हत्यादि-पापानि बहुजन्मार्जितान्यपि ।
नश्यन्त्येवनसन्देहो रामस्य वचन तथा ॥२॥

---

१ आनन्दरामायण ७।१।१६६ १७१
२ तत्रव प० १
३ तत्रव ४

य सम्पूज्याभिराम पठति च हृत्य रामचन्द्रस्य भक्त्या ।
योगीन्द्रैरप्यलभ्य पदमिह लभत सर्वदेव स पूज्य ॥३॥[1]

दार्शनिकमेतत्स्तोत्रम् यथाकाशस्त्रिविधो महाकाशो जलाशयावच्छिन्ना काश प्रतिबिम्बाकाशश्चेति। एवमेव चैतन्य त्रिधापूर्णम उपाधिमण्डलस्थ विमुक्तात्। सर्वबुद्धिसमष्टिरूपा मायातदवच्छिन्न चैतन्यमीश्वरे। बुद्धिप्रतिबिम्बरूपा जीव द्वितीय चैतन्यम बिम्बभूत तृतीयम। तथा च—

आकाशस्य यथा भेद स्त्रिविधोदृश्यते महान ।
जलाशय महाकाश स्तदवच्छिन्न एवहि
प्रतिबिम्बाख्यमपर दृश्यत त्रिविध नर ॥१॥
बुद्धयवच्छिन्न-चैतन्य मेक पूर्ण तथापर
आभासस्त्वपर बिम्ब, भूतमेव त्रिधा चिति ॥२।[2]

अबुधरेव स्वस्मिन्कर्तृत्व जीवत्व चारोप्यत। आभास मृषाबुद्धिरत स्वतत्त्वबुद्धिरिति। ब्रह्मत्वविच्छिन्नमिति जीवात्मनोरैक्य प्रतिपादन परस्तोत्रम्। भेदस्तुभ्रान्तिजन्यस्तत निवृत्तिस्तु मत्यवमवितु शक्या। तथा च—

आभासबुद्धे कर्तृत्वम, विच्छिन्न विकारिणि ।
साक्षिण्यारोप्यत भ्रान्त्या जीवत्व च तथा बुध ॥१॥
आभासस्तु मृषा बुद्धि रविद्या कार्यमुच्यत ।
अविच्छि नतु तद्ब्रह्म विच्छेदस्तु विकल्पित ॥२॥
अविच्छिन्नस्य पूर्णेन एकत्व प्रतिपाद्यते ॥३॥[3]

## १२ लक्ष्मीनृसिंह करुणारसस्तोत्रम्

यताऽत्रपुष्पिकायामिदमवनाम्।[4] तस्म्या-समतस्य विष्णोरवतारभूतस्य नृसिंहस्य चर्चा। तथा च—

इति श्रीमत्परमहंसपरिव्राजकाचार्य गोविन्द-भगवत्-पूज्यपाद शिष्यस्य भगवत्पूज्य-पाद-श्रीमच्छङ्कराचार्यस्य कृतौ लक्ष्मी नृसिंह-करुणारसस्तोत्र सम्पूर्णम्।

स्तोत्रस्यास्य पाठेन नरा भगवच्चरण-कमलमवाप्नोति। तथा चोक्तम्।

लक्ष्मी-नृसिंह चरणाब्जमधुव्रतेन ।
स्तोत्र कृत शुभकर मुनिशङ्करेण ।
य तत्पठन्ति मनुजा हरिभक्तियुक्ता
त यान्ति तत्पद-सरोजमखण्डरूपम ॥१॥[5]

१ अध्यात्मरामायण १।१।११५ ११६ ११७
२ तत्रैव १।१।८ १०२ १ ६
३ तत्रैव १।१।१०७ ११०
४ शङ्कर चावल्यां पृ० ३२२
५ तत्रैव

आचार्य-रचितोऽत्र श्लोकाना सप्तदश । वसन्ततिलका छन्द । दीर्घ समासयुतम । सरल सप्रसादम् । सानुप्रासम । भगवतस्वरूप वर्णनपरम् प्रेम्णो ऽतिरिक्त नान्यदिति । तथा च—

श्रीमत्पयोधिनिकेतन चक्रपाणे ।
योगीन्द्रभोगमणि पराश्रितपुण्यमूर्ते
योगीश शाश्वत शरण्य भवाब्धिपोत,
लक्ष्मीनृसिंह मम देहि करावलम्बम् ॥१॥
एकेन चक्रमपरेण करेण शङ्खम—
न्येन सिन्धुतनयामवलम्ब्य तिष्ठन ।
वामेतरेण वरदाभय पद्मचिह्नम
लक्ष्मीनृसिंह मम देहि करावलम्बम ॥२॥[1]

## १३ वाराह स्तोत्रम्

यतोऽत्र वाराहस्यभगवत स्तोत्रम् ।

विष्णु-पुराणे चतुर्थाध्याय ३०तम श्लोक-मारभ्य ४४तम यावत् श्लोका १५ । स्तोत्रकर्तारोमुनय । धरया प्रार्थितोविष्णुर्वाराहरूप धृतवान् तस्य व्यापक रूप वीक्ष्यमुनयस्तत्तुष्टुवु ।

स्तोत्रञ्चेदजगद्बाधानिवृत्तिकर यतो वाराहो भगवान्संस्तुत शान्ति व्यधत्त ।

सरले सानुप्रासेऽल्पसमासमयऽत्र भगवत परमेश्वरस्याशभूत जगदिति वर्णनम् । भगवतव्याप्तमिद जगदत्रमोहविमूढचेतसो जना भ्रमरूपमेव भुवन पश्यन्ति । परमेश्वरश्चैक एव । तस्मात्पर नान्यदस्ति । अनुप्रासप्रासित चेदम् । भगवत सगप्रवृत्तिजनानामुपकारिणी । तथा च तत्रय—

एव सस्तूयमानस्तु, पृथिव्या धरणीधर ।
साम-स्वरध्वनि श्रीमान, जगजपरिघघरम् ॥१॥
ततुष्टवुस्तोषपरीतचेतसो, लोके जना य य निवसन्ति योगिन ।
सनान्दनाद्या ह्यतिनम्र-कन्धरा धराधर धीर-तरोद्धतेक्षणम ॥२॥
पदश्रमाक्रान्तभुव भवन्तमा दिस्थित चाप्पर विश्वमूर्ते ।
विश्वस्यविदित परमेश्वरोऽसि, प्रसीदनाथोऽस्ति परा-वरस्य ॥३॥
ज्ञानस्वरूपमखिल, जगदवबुद्धय ।
अर्थस्वरूप पश्यन्तो, भ्राम्यन्ते मोहसम्प्लवे ॥४॥[2]

---

१ शङ्करप्रथावल्यां प० १४८

२ विष्णुपुराणे १।४।२६, ३० ३२, ४०

## १४ विष्णु कवचम्

विष्णुन्वत्वात । सूच्या नाम्नानेनोल्लेख । अत्राध्यायोपक्रमे च "विस्तारकवच विष्णो ।'[२]

ब्रह्मवैवर्ते १म खण्डे १९ तमेऽध्याय १७ तम श्लोकमारभ्य ३८ तम श्लोक यावत । श्लोका २२ । श्रीकृष्णो ब्रह्माण प्रोवाच ।

कवचस्यास्य धारणेन नरो जीवन्मुक्तो भवति कवचेन नरोविष्णुना समो भवेत । अश्वमेधादयोऽप्यस्य षोडशीं कला नार्हन्ति । तथा च—

कवचस्यास्य प्रसादेन जीवन्मुक्तो भवेन्नर ।
यदि स्यात्सिद्धकवच विष्णुरेवभवद्द्विजा ॥१॥
अश्वमेध-सहस्राणि, वाजपेय शतानि च ।
कवचस्यास्यपाठेन कला नार्हन्तिषोडशीम् ॥२॥
गोपनीयमिद कवच श्रीकृष्णो ब्रह्मणे ददौ ॥३॥[३]

सरल स्मिन कवचस्तोत्र आदौविनियोगस्ततोऽगन्यास-करन्यास दिग्बन्धनादिकम । षोडशाक्षरो मन्त्र । स च—

ओ नमो भगवतेरासमण्डलेशाय स्वाहेति तान्त्रिकमेतत । अनुष्टुप-छन्द । भगवतोरास-मण्डलेशश्रीकृष्णस्य गुणवर्णनम । अगन्यासादिकम । नमन्तिपदै स्तवन च । सरस प्रवाहात्मक भावात्मकम् । सगीतमान्या समन्वितम् ।

## १५ विष्णुपादादि-केशान्तस्तोत्रम्

यतोऽत्रविष्णो पादादि-केशान्तवर्णनम् । पुष्पिकाया चेदमेवनाम्, तथा च तत्रैव—

इति श्रीमत्परमहसपरिव्राजकाचार्यस्य श्री गोविन्द भगवत्पूज्यपाद-शिष्यस्य श्रीमच्छकरभगवत कृतौ विष्णु पादादि केशान्तवर्णनस्तोत्रम् ।[४]

आचाय शकरोऽस्य रचयिता श्लोकाश्च ५२ ।

स्तोत्रस्यास्य पाठेन नर पचकोषावरणमुन्मुच्य मानाबिम्बान्तरमयात्मरूप परमानन्द समवाप्नोति तथा च तत्रैव—

मानत्पादादिकेशस्तुतिमिति रचिताम्
कीर्तयित्वा त्रियाम्ना
पादाब्जद्वन्द्वनानतमतिमस्तकनाप्रमेय ।

---

१ ब्रह्मवर्ते प २
२ तत्रैव १।१९।८
३ तत्रैव १।१९।३८ ३९
४ शकरग्रन्थावल्याम् प० ७०

उन्मुच्य वात्मनानानिचयक्वचक पचतामेत्यमानो ।
बिम्वा तगोचर स प्रविशति परमान दमात्मस्वरूपम् ॥१॥[1]

स्रग्धराबद्धेऽस्मि स्तोत्रे विष्णो पादादिमारभ्य केशा तवर्णनम । आदौ तदस्त्रपाचजन्यचक्रकामुक न दक कौमोदकीना वणनम् । तत सुपर्णशेषेन्दिरापासु चरणे रेखा-पादतदगुलि नखालि जघादीना चर्चा तदन्तःऽङगानाम् । दीर्घ समासमयम् ।

## १६ विष्णु पजर स्तोत्रम्

यतोऽत्र भगवतोऽस्त्राणिशरीराङ्गानि च वाहुपजर-रूपाणि प्रोक्तानि तदेव च नाम स्तोत्रे च[3]

गरुड-पुराणे श्री शकर-नारायण-सम्वाद १३ अध्याये १म श्लोकमारभ्याध्यायान्त । श्लोका १३ । वक्ता चात्र हरि ।

फलचास्य स्तोत्रस्य जपन नर शत्रु विजयते । पुरा विष्णुभगवान भगवते शकरायददौ । ततश्च प्रसारमगमत । तथा च—

एतज्जपन्नरोभक्त्या, शत्रूनविजयते सदा
एवमुक्त शकराय वैष्णव पजर महत ।
पुरा रक्षार्थमीशान्या, कात्यायन्यावृषध्वज ॥२॥[4]

अनुष्टुब्-बद्धमिद भाषाऽत्र सरलादी विग्रक्षणम् ततश्चाङगरक्षादिकम् । अल्पसमास नामगणनात्मक रूपेण स्तवनम् । तथा च तत्रैव—

प्रवक्ष्याम्यधुनाह्येतत् वैष्णव पजर शुभ ।
नमो नमस्ते गोविन्द, चक्र गृह्य सुदर्शनम् ॥१॥
मुसलशातनगृह्य पुण्डरीकाक्ष रक्षमम् ।
उत्तरस्या जगन्नाथ, भवन्त शरणगत ॥२॥[5]

नाम्नानननानेक पुराणेषु स्तोत्र मतम् तथा च वामनपुराण १७ऽध्याये अग्नि पुराण २७तमेऽध्याय गरुडपुराण ८६ तमेऽध्याय ६ २५ श्लोका ।

## १७ विष्णु सहस्रनाम-स्तोत्रम्

यतोऽत्र विष्णो सहस्रनाम्ना वर्णनम् । स्तोत्रे चेदमवनाम—तथा च—

ईश्वर परम ब्रह्म, परमात्मानमव्ययम् ।
विष्णु नामसहस्रेण स्तुवन्मुक्तो भवन्नर ॥१॥[6]

---

१ शकरग्रन्थावल्याम् श्लोक ४२
२ तत्रैव ६ १८
३ गरुडपुराणे प० रामतेज पाण्डेय पं पुस्तकालय, काशी १९६३ १३।१
४ गरुडपुराणे १३।१३ तथा १३।१२
५ तत्रैव १३।१ तथा ४
६ तत्रैव १५।२

५।५।



स्तोत्रमिद सर्वपापविनाशनम पठश्च द्विजोविष्णुत्व क्षत्रियोविजय वैश्यो धन सुख शूद्रा विष्णुभक्ति च लभत तथा च तत्रव—

शृणुष्वावहिताभू वा, सव पापविनाशनम् ।

पठन्द्विजश्च निष्णुत्व, क्षत्रियाजयमाप्नुयात ।

वश्योधन सुखशूद्रो विष्णुभक्ति-समन्वित ॥१॥[1]

अनुष्टपछन्दोबद्धमिद विष्णो सहस्रनामात्मक सव पाप विनाशनम । तत्र कानिचि नामा य यत्रानुपलब्धानि । समेषामवताराणा नामा यत्र वर्णितानि । प्राय समस्त-पदान्यव । तत्रापि समानाक्षराणि यत्र पत्यन्तानि तत्रता येव बहुषु श्लोकेषु यत्र च यत्र कारणात्मकानि तत्र ता यव, यत्रात्मान्तानितत्र ता यव, तथा च अर्जुनभीमादयोऽप्यस्य नामानि । तथा च—

वासुदेवो महाविष्णु, र्वामनो वासवोवसु ।

बालचन्द्रविभाबालो बलभद्रो बलाधिप ॥१॥

सदेवाना पतिश्चैव वष्णीनापतिरव च ।

पति हिरण्यगभस्य, त्रिपुरा त पतिस्तथा ॥२॥

च धनीमनप्रदाध्य, यादवानाहितरत ।

अजु नस्यप्रियश्चैव अजुनो भीम एव च ॥३॥

भरतोजनमोजय, सर्वाकार विवर्जित ।

निराकारोनिर्निमित्तो निरातङ्को निराश्रय ॥४॥[2]

## १८ विष्णुस्तोत्रम्

यतात्र विष्णु-स्तोत्रमनस्तदवनाम । पुराण एव स्तोत्रनाम-कथनम् । यच्चकपीगमस्तस्तोत्रमिति ।[3] फलकथने च य एतेन पुमान्नित्यस्तु वास्तोत्रेणमा भजन् ।[4]

भागवतमहापुराणे ३य स्कन्धे ६म ध्याये १म श्लोकमारभ्य २६ तम यावत् । श्लोका २६ । फलकथन च ४० तमे श्लोके ।

स्तोत्रस्यास्यपाठेन भगवान्विष्णु शीघ्रप्रसीदति । तथा च—

य एतेन पुमान्नित्य स्तु वा स्तोत्रेण मामजेत ।

तस्याशुमम्प्रसीदेय सवकाम-वरश्वर ॥१॥[5]

---

१ गरुडपुराण १५।३ तथा १६

२ तत्रैव १५।४ १ ६ ३८

३ श्रीमद्भागवते मूलमात्र सप्तम सस्करण गीता प्रेस गोरखपुर २०१८ ३।६।१८

४ तत्रैव ३।६।४०

५ श्रीमद्भागवत मूलमात्रे सप्तम सस्करण गीता प्रेस गोरखपुर, २०१८, ३।६।४०

वसन्ततिलका तिलकीकृतेऽत्रभगवतो विष्णो स्तवनम । भगवाश्च मायातीत निगुणोऽपि समस्तावताराणामेकमात्र बीज । तस्यवनाभिकमलाद ब्रह्माविबभूव । माया-मोहित चेतसो नानामनोरथविय शीतोष्णवातवप भिद्यमाना अपि भगवन्त नोपासत । अनेकपयोऽपि दवशात्त विस्मरन्ति ॥ तथा च—

दवाहृताथ रचना, ऋषयोऽपि दव ।
युष्मत्प्रसाद विमुखा इह सचरन्ति ॥[१]

प्राणप्रयाण-कालेऽप्यस्य स्मरणेन नरा मुक्ति गच्छन्ति अयमेव जगत सर्गस्थिति प्रत्यवहाराणा हेतु । लीलया नानारूपाणि विधत्ते नटस्येवानुकृति करोति । स्तोत्रस्यमाषासरला । सानुप्रासा सप्रसादा समासयुक्ता ।

## १९ विप्रपत्नीकृत विष्णु स्तोत्रम्

सूच्योभेतदेवनाम फल-कथने चेदमेव नाम ।[२]
तथा च—

विप्रपत्नी-कृत स्तोत्रमिति ।[३]

ब्रह्मवर्ते ४थ खण्डे १८ अध्याये वृन्दावनोपक्रमणे ३६तमश्लोक मारभ्य ४८तम यावत । श्लोका १३ । गाश्चारयन्तो बाला दूरगतास्तत्र च क्षुत्क्षामकण्ठा भगवन्तम न्वयाचिरे । भगवतादिष्टा विप्रयागगता विप्रेभ्यश्चा न्नमलब्ध्वा विप्रपत्नी प्रार्थयामासु पत्न्यश्च प्रम विह्वलितात्मन कृष्णान्तिक-मुपेत्य यथाज्ञान त तुष्टुवु ।

स्तोत्रस्यास्यपूजाकालेपठनेन नरोऽचला भक्ति लभते तथा च—

विप्रपत्नीकृत स्तोत्र पूजाकाल च य पठेत ।
सगति विप्रपत्नीना लभते नात्र सशय ॥१॥[४]

अत्र भगवत सगुणनिगुणस्वरूप-वणनम । तनव साक ब्रह्मविष्णुमहेशा दीना तदशत्वेन कथनम । तथा च—

सृष्टिस्थित्यन्त विषय य चदवास्त्रय स्मृता ।
तेत्वदशा सवबीजा ब्रह्मविष्णु महेश्वरा ॥१॥[५]

भगवानेवमहदादिसृष्टीना सूत्रम । पचतन्मात्रात्मक स सवशक्तीना मूलम । अस्य महिमान वक्तु पावती-कमलाराधादयोऽसमर्था ।

---

१ तत्रव ३।६।१०
२ ब्रह्मवर्ते प० २
३ तत्रैव ४।१८।४८
४ ब्रह्मवर्ते तत्रैव
५. तत्रैव ४।१८।३७

## २० विष्णु स्तोत्रम्

यतोऽत्रस्तोत्रेविष्णोरचर्चा फल-कथनपुरस्सरा पुस्तक धृमिदमेवनाम ।[१]

शाक्तप्रमोद विष्णुतन्त्र ५५४ पृष्ठे धृतमिदम् श्लोकाश्चात्र १३ ।

स्तोत्रस्यास्य पाठेन धर्मार्थकाम मोक्षाणा चतुर्वर्गरूपाणा प्राप्ति । तथा च—

प्रीणयेदनयास्तुत्या, जगन्नाथ जगन्मयम ।
धर्मार्थ-काममोक्षाणा माप्तये पुरुषोत्तमम् ॥१॥[२]

सरले सानुप्रासेऽत्र स्तोत्रे भगवतोदशावताराणा मत्स्यकूर्मवाराह-नृसिंह वामन—परशुराम राम बलदेव कृष्णादीनामेकैकश्लोकेन कथनम्। तेषामेव ताराणामवतरणहेतु प्रमुखवक्त्र्य रूपेणोपन्यस्त । तथा च—

"मन्नातिमगन्मयाधिपाय स्तम्भान्तरालादुदितानृसिंह ।
रिपुसुराणा निशितनखाग्र, विदारयन्तन्तचविस्मरामि ॥१॥
पुरा सुराणामसुरान्विजेतु, सम्भावयश्छीवरचिह्नवेषम् ।
चकार य शास्त्रममोघकल्प, तमूलभूत प्रणतोऽस्मिबुद्धम ॥२॥
क्षीराम्बुधौनेपविशेपतल्पे, नयानमन्नस्मितशाभिवक्त्रम् ।
उत्फुल्लनेत्राम्बुजमम्बुदाम्मसामाद्य श्रुतानामसकत्स्मरामि ॥३॥
कुल रघूणा समवाप्यजन्म विधाय सेतु जलधेजलान्त
लङ्केश्वरव शमयाचकार, सीतापति त प्रणमामि मक्त्या ॥४॥[३]

## २१ विष्णु स्तोत्रम्

यतोऽत्रविष्णु स्तुत ।

देवी भागवत दशमे पचमाध्याय २यमारभ्य २७तम यावत श्लोक-संख्या २७ । स्तोत्र-कर्तारो देवा ।

अस्य स्तोत्रस्य पाठेन नर दविन दग्निभीतिक-तापहीनो भवति । तस्य सर्वविघोपद्रवा शाम्यन्ति । मोक्षैकसाधनभूता भक्ति च लभते । तथा च तत्रैव—

य एतत्पठत स्तोत्र कल्य उत्थाय मानव ।
मयि भक्ति पराकृत्वा न शोक न स्पर्शेत्सदा ॥
अनग्मीकालकर्णी च, नात्रमत्तदगहसुरा ॥१॥[४]

---

१ शाक्तप्रमोदे ५५४
२ तत्रैव, श्लो० १३
३ तत्रैव ४ ६ १२ ७
४ तत्रैव देवीभागवते १ ।५।२१ तथा २२

स्तोत्रेऽस्मिन् भगवतो विष्णोः मत्स्याश्वकच्छपनरसिंहवराहाद्यवताराणां चतुर्विंशतिः कथिता। तेषामवताराणां श्लोकेनैकेन चरितमत्रोपन्यस्तम्। यथा जलस्य स्यन्दन-बुदबुद-तरङ्गमया विकाराः परिदृश्यन्ते तथैवास्य विष्णोर्गुणकर्मानुरूपाणि सन्ति नामानि। तस्यावताराश्च स्वेच्छयात्तवपुषः प्रयोजनं देशकालमनुसृत्यैव यथा जलधौ मीनः कूर्मादयः। एभिरवतारैः स स्वविभूतिं सर्वत्र प्रमाणीकरोति। दुराग्रहहीना नरा एषु कमप्यवलम्ब्य संसारार्णवपारं कर्तुं क्षमा भवन्ति। मायाविभ्रष्टचेतसश्चेतश्चेतश्च भ्रान्ता न तथ्यमर्थमवगन्तुं पारयन्ति।

## २२ शम्भुकृत श्रीकृष्ण-स्तोत्रम्

भगवताशम्भुनाश्रीकृष्णस्य स्तोत्रं कृतमिति तदर्थं नाम। पुराणे च तथैव कृत मिति शम्भुकृत कृष्णस्तोत्रमिति।[१]

ब्रह्मवैवर्ते ३ येऽध्याये २४ तम श्लोकमारभ्य २९ तम श्लोकयावत्। श्लोकाः ५। सृष्ट्यादौ शंकरस्तुष्टाव।

स्तोत्रस्यास्य भयत रूपेण पठनेन नरो विजयं प्राप्नोति सर्वसिद्धिश्च तस्य जायते तस्य मित्रश्वर्य धनादीनां नित्यं वृद्धिर्भवति। तथा च तत्रैव—

> 'इति शम्भुकृतं स्तोत्रं यो जनः संयतः पठेत्।
> सर्वसिद्धिर्भवेत्तस्य विजयं च पदे पदे ॥१॥
> सततं वर्द्धते मित्रं धनमैश्वर्यमेव च।
> शत्रुसैन्य-क्षययाति दुःखानि दुरितानि च ॥२॥[२]

सरलेऽत्र स्तोत्रे भगवतः श्रीकृष्णस्य महिमप्रतिपादनं संक्षिप्तं पदैस्तत्रापि तस्य महत्त्वमुद्घोष्यते। भगवान् कृष्ण एवास्य जगतः कारणं स एव च वितत्यविश्वरूपेण तिष्ठति। संहारे रुद्र रूपेण विश्वसंहरते। ब्रह्मरूपेण च सृष्टिं विधत्ते। विष्णुरूपेण च रक्षति। समस्त जगतामाधारः। न केवलं विश्वस्यापि तु तस्य कारणस्यापि कारणं श्रीकृष्ण एव तथा च स्पष्टमवसीयते यत्कृष्णात्परं किमपि तत्त्वं नास्ति। तथा च तत्रैव—

> विश्वं विश्वेश्वरेशं च विश्वेशं विश्वजं परम्।
> विश्वाधारं च विश्वस्थम् विश्व-कारण कारणम् ॥१॥[३]

## २३ शिवकृत रामस्तवराज

भगवता शिवनानेन स्तवेन रामस्तुतः। शिवकृतत्वादस्य राजत्वं च

---

१ ब्रह्मवैवर्ते १।३।२८
२ तत्रैव
१ ब्रह्मवैवर्ते १।३।२९

स्वाभाविरभतस्तदेवनाम । सूच्यावेदमेव नाम ।[1] फल-कथने च 'स्तवरा राघवस्य श्रवणात पापनाशनम ।'[2] पुष्पिकाया च—

इतिश्री शतकोटि रामचरितान्तगत-श्रीमदानन्द रामायणे विलास क वाल्मीकीय शङ्कर-कृत रघुवीर स्तव राजो नाम प्रथम सग ।

आनन्द रामायण ४थ विलास १मश्लोकमारभ्य ८६ तम याव श्लोका ८६ । रामदासो वक्ता विष्णुदास श्रोता ।

अस्य स्तोत्रस्य त्रिसन्ध्यपठनेन नर सवसम्पत सौभाग्य चावाप्नोति तथा च तत्रव—

य पठेच्छृणुयाद्वापि त्रिसन्ध्यश्रद्धयान्वित ।
ब्रह्महत्यादि पापानि तत्समानिबहूनि च ॥१॥
हेमस्तेयसुरापान, गुरुतल्पायुतानि च ।
गोवधाद्युपपापानि, चिन्तनासम्भवानि च ॥२॥
श्रीराम स्मरणनव व्यपोहति, न सशय ।
इद सत्यमिद सत्य, सत्य नैवान्यदुच्यत ॥३॥[3]

स्तोत्रेऽस्मिन्नादौ फल-कथन[4] ततो द्विभुजस्यभगवतो रामचन्द्र ध्यानम । अत्र राम सच्चिदानन्दरूप[5] विनाशहेतुर्विमलायताक्षो विश्वेश्वर अणोरणीयान महतश्च महीयान सत्यस्वरूपो दशरथात्मज । स एव मत्स्या कूर्मादि रूपेण नानातनूधत्ते ।[6] सर्वे ब्रह्मादयोऽस्यवप्रभावात ।

## २४ श्रीकृष्णस्तोत्रम्

यतोऽत्र श्रीकृष्णस्य स्तव । सूच्यामस्यव नाम्नोल्लेख ।[7] उपसहारे इद ते कथित ध्यान स्तोत्र च कवच मुने ।[8]

ब्रह्मववर्ते १म खण्डे २१ तमेऽध्याये २८ तम श्लोक मारभ्य ५७ श्लोक यावत । श्लोका ३० । शौनकम सूत प्राह । सुदुर्लभमिद पुरा ब्र कुमाराय ददौ ।

स्तोत्रस्यास्य पाठेन नर भगवद्दर्शन प्राप्य दुःखादि मुक्तो भवति

---

1 आनन्दरामायणे प० ११
2 तत्रैव ४।१।८२
3 तत्रव ५।१।८२ ८३ ८५
4 तत्रैव ४।१।१ २३
5 आनन्दरामायणे ४।१।२४ ३३
6 ब्रह्मवर्ते ४।१।३४।३८
7 तत्रैव १।२१ ३
8 तत्रैव १।२१।४४

जन्म मृत्यु जरा-व्याधिदु खानि च न भवन्ति ।[1]

सरलेऽत्रस्तोत्र प्रथम कल्पपादपमन्त्रउक्त । स च यथा श्री नमो भगवते रासमण्डलेश्वराय श्रीकृष्णाय स्वाहेति मन्त्रोय कल्पपादप ।[2] अत्र भगवान्सूय कोटिसमप्रभ वर्णित । तस्य महिमाचानिवचनीय स च नूतनजलधर रुचि शरदनभे शारदचन्द्र मुख पक्वबिम्बौष्ठ । मुक्ता-पक्ति तिरस्कारिदन्त पक्तिक । मुरलीयस्तन्कर कोटिचन्दपलावण्य द्विभुज पीतवासा रत्नक्यूर वलयवरत्नविभूषित मयूरपिच्छशिख मालतीवनमालालकत । भाषा चास्य सरला सरसा लघ्वी शान्याभना अल्प-समासा ।[3] अनुष्टुप चात्र छन्द ।

## २५ श्रीकष्णस्तोत्रम्

यतोऽत्र श्रीकृष्णस्य वणनम । सूच्यामिदमव नामोपक्रमे[4] च 'स्तोत्र च सामवेदोक्त [5] फलवथन चापि श्रीकृष्णस्य स्तोत्रमिदमिति । '[6]

ब्रह्मववर्ते ३य खण्डे ३२ तमऽध्याय २८ तम श्लोकमारभ्य ७८तम श्लोकान्त श्लोका ५१ ।

स्तोत्रमिद धर्मार्थकाम मोक्षदायक हरिभक्तिदमिह सर्वेश्वयदमन्त हरि पददायकम । स्वास्थ्यगुणविद्या धनदमिति । तथा च—

श्री कृष्णस्य स्तोत्रमिद त्रिसन्ध्य य पठेन्नर ।
धर्मार्थकाममोक्षाणा स दाता भारत भवेत ।।१।।
हरिदास्य हरौ भक्ति लभेत्स्तोत्र प्रसादत ।
इहलोक जगत्पूज्या, विष्णु तुल्योभवन्नर ।।२।।[7]

अत परब्रह्मणो रूप स्थूलतम सूक्ष्मतम सगुण निगुणनिरूपमम । अयमेव सृष्टि स्थिति-पालनादिकम क्तु नानारूपाणि विधत्ते । प्रकति पुरुषात्मक-स्वरूप जगत सव तदवभामादव भासते । सकल जगदनोतप्रोतम । विभूतिमत्सत्वव्यवशा धिवयम । गीताया च—

*यदयद विभूतिमत्सत्व, श्रीमदूर्जितमव वा ।*
*तत्तदेवावगच्छत्व ममतेजोऽशसम्भवम् ।।१।।*[8]

---

१ ब्रह्मववर्ते १।२१।४५ ५७
२ तत्रव १।२१।३
३ तत्रव १।२१।३३ ३६
४ तत्रव १० ६
५, ब्रह्मववर्ते ३।३२।२८
६ तत्रव ३।३२।७३
७ तत्रव ३।३२।७३ ७४
८ श्रीमद्भगवद्गीतायाम् १ ।४१

सरले सानुप्रासे सप्रसादऽनुष्टुबछन्दसा भगवतो गुणनामवीतनमिति ।

## २६ श्रीराम भुजगस्तोत्रम्

भुजग प्रयात छन्दोमीरामचन्द्रस्य वणनमतस्तदेव नाम तथा च पुष्पिकायाम इति श्री मत्परमहंसपरिव्राजकाचार्यस्य श्रीगोविन्दभगवत्पूज्यपाद शिष्यस्य श्रीमच्छङ्करभगवत क्तो श्रीराम भुजगप्रयात सम्पूर्णम । [1]

माचार्य शङ्कर कृतमिद श्लोकाश्चात्र २६ ।

वदानासारभूतस्यास्य पाठेन स्वम्वा ते चिन्ताम च नरोरामचन्द्र एव भवति । तथा च तत्रव—

भुजगप्रयात पर वेदसारम् । मुन्य राम चन्द्रस्य भक्त्या च नित्यम ।
पठन्सतत चिन्तयन्स्वान्तरग सएव स्वय रामचन्द्र स धन्य ॥१॥[2]

अवतार चन्द्रस्य रामचन्द्रस्यात्र परब्रह्मरूपेण सच्चिदानन्दगुणाधारा धारहीनवरेण्य महद्विभुस्वरूपेण चिन्तनम ।

विशुद्ध पर सच्चिदानन्दरूपम गुणाधारमाधारहीन वरेण्यम ।
महान्त विभान्त गुहान्त गुणान्तम सुखान्त स्वय धाम राम प्रपद्ये ॥१॥[3]

अत्र रामाय मुरारिप्रमुखस्यापि प्रयोगस्तथा—

हरे राम सीतापत रावणारे खरारे मुरारेऽसुरारे परेति,
लपन्त नयन्त सदाकालमेव समालोकयालोकयाशेष बन्धो ॥१॥[4]

## २७ श्रीरामचन्द्राष्टकम्

यतोऽत्ररामचन्द्रविषयकमष्ट श्लोका फलकथने वेदमवनाम ।
श्रीरामचन्द्रस्यवराष्टक त्वाम्
मयरित देवि मनोहर व ॥[5]

भानन्द रामायणे सारकाण्डे १२ ह्यध्याय ११६ तम श्लोकमारभ्य १२४ तम यावन । श्लोका ९ । युद्धानन्तर रावणे हत शिवनाकारि ।

ये मनोहरमेतदष्टक पठन्ति शृण्वन्ति गृणन्ति च त स्वीय सर्वकामान् लभन्ते । तथा च—

श्रीरामचन्द्रस्य वराष्टक त्वा मयरित देवि मनोहर ये ।
पठन्ति शृण्वन्ति गृणन्ति भक्त्या ते स्वीय कामा प्रलभन्ति नित्यम् ॥१॥[6]

---

१ शंकरग्रन्थावल्याम् पृ० ३८१
२ तत्रैव श्लोक० २६
३ तत्रैव श्लोक० १
४ तत्रैव श्लोक २६
५ मानन्दरामायण प० रामतेज सम्पादित पण्डित पुस्तकालय, काशी १६४८ पृ० १४१
६ तत्रैव १।१२।१२४

स्वरूपपद्येऽपि शब्द साम्य योऽयमलङ्कारो यत्र तत्र सर्वत्र स्तोत्रेषु दृश्यते तथा च—

गणपति परिवार चारु केयूर-हारम
गिरिधर-वर सार योगिनी चक्रधारम ।
भवभयपरिहारम दु मदारिद्रयदूरम
गणपानमभिनन्द वक्रतुण्डावतारम ॥१॥[1]

प्रत्यनीक— याग योगविदा विधुतविविध व्यासङ्ग शुद्धाशय
प्रादुर्भूत सुधारसप्रसृमरध्यानपद्मार्घ्यासिताम ।
प्रानन्दप्लवमानवोधमधुरामोदच्छटा मेदुरम ।
तभूमानमुपास्महेपरिणत दन्तावलस्यात्मना ॥१॥[2]

विभावना—

पद्माना दशमियदस्तुत नतस्त्वस्त्रेयस पादुकाम,
त्रय तायकवि परोह यमुपस्तत्रास्ति कोविस्मय ।
स्तोत्रप्रनमतीवमूरमपि, मा श्लाक सहस्रेण त,
स्तोतरि समवेक्ष्य सूक्ष्ममतिभि कस्यान्नविस्मीयते ॥१॥[3]

अल्प कृत महत्त्वम विलोक्य कथन विस्मीयत ।

काव्यलिंगमुक्तश्च—

स्वरप्ररोहयतुपद्यसहस्रमाशु दासस्य मेवदनसीम्नितवावलोक ।
य क्वापि हन्त सकदुन्नत्रलिव धमाभि जन्तो
जगज्जननिस्तौतिसहस्र मभणाम ॥१॥

मुद्रा— भजे दुग्धाम्बुधि यत्र परिष्वनु हरेरुर ।
कठिन सुकुमार च रत्न प्रादुरभूतद्विधा ॥[4]

अत्र प्रादुर्भावस्तवकस्य प्रादुर्भावा मुद्रानकार ।

विरोधाभासयमकौ—

जननिपुष्यसि तामरसपदम विनतपु च न तामरस पदम ।
परमुरस्फुरण प्रतिरोधिन परमुरस्फुरण नयसेऽधुना ॥१॥[5]

उदात्तरूपकातिशयोक्तय —

---

१ गणशाष्टके १ बृहत्स्तोत्ररत्नाकरे
२ महागणपतिस्तोत्रे १
३ सहस्रसहस्र १।३३
४ तत्रव १।२७
५ तत्रैव ३।२४

द्विपचग्रीवाना चकित-समुदर्चानिशिचरा
प्रपचप्रक्षिप्त पवनसुत बालेहुतवह ।
यतो जात गीत तमिहवसताप विवशे।
कृपापूर स्वरविरतु मयि लोकाम्बुभवती ॥१॥[१]

अर्थान्तरन्यास —

कार्येषु कारणगुणा नियता भव
न्त्युक्ति सतामक्तियामवधारयाम ।
मान्द्रीक्ला च भवती च पयाधिमध्या
जजातेदमम्बसुधया दयया च शीते ॥१॥[२]

एकावली— चलतिकलितायासे श्वासे कफागलितगले
भ्रमतिनयनेभ्रा तेस्वान्ते पिपासुषु चासुषु ।
स्वरयतिदयाजन्तौ हृत्तोत्तमे भवती रमे ?
त्वमपि कृपणत्राणे प्राणेश्वरश्चपराङमुखम ॥[३]

श्लेष—भुवनोत्तरसिन्धुभूषितो घनशवालक्वत कचोध्रुवम ।
सुरुचामहितीहिमालयोदितयोदभासितमीनलक्षण ॥१॥[४]

तवकचोघनोमघ शवाल उत्तनीलोकोत्रह्मा तदवत घनायनिवस्यालका इ द्वा तेश्रूयमाणस्य वत पत्येकेन सम्ब ध । भुवनोत्तरसिन्धुभूषित भुवनोत्तरेण नोकोत्तरेण सिन्धु भुवा चन्द्रेण तदारयालकारेणायित आश्रित यद्वा भुवनोत्तरे लोकेत्तरे समुद्रेत्वयिसन्तान प्रेम्णा भूषित ।

सुरुचा नोभनकृष्णवर्णेन महित एवहि निश्चयेन घनश्चोदितया मालया स्रजा उदभासितो दीपित मीनलक्षण कामोयन । तथा च भुवनेन जले नोत्तरस्य पूणस्य सि धो समुद्रस्य भवि उषिते मालया राजिरूपेणोदितया सुरुचा विद्युता महितस्तथा उदभासिन भुत्पादितम् मीना रक्ष्यन्त येन तन्मीनलक्षण जलवपण येन। रलयारेक्यात ।

नवालश्च—भुवनन जलेनोत्तरस्या सिन्धुभुविनदीभूमौ उषित तथा माया लक्ष्म्या आलय कमल तस्मा दुदितया सुरुचा महित प्रकटितमत्स्यचिह्न । सामानाधिकरण्यात ।

ब्रह्मा—भुवनोत्तरे लोकात्तरे सिन्धुभुविनदीजन्य पदमे आसनभूते उषित । सुरुचा शोभमान तेजसामहित एव हिमालयादुदित तयासरस्वत्यान धावा उदभासितवाम ।

---

१ लक्ष्मीसहस्र ४।१
२ तत्रव ४।१३
३ तत्रव ४।
४ तत्रव ८६

उपमा—सिन्दूरकान्ता जगदम्बमन्दीसाराभिरामाचिकुरावलिते ।
मध्यामहर्दवि कलिम्बन्या गगामरस्त्वत्पुदितानुपग ॥१॥[१]
मनोजमानस्तवदंचि हास मध्यमधुन्वसनवीर्तिभामम ।
बिम्बालसत्वद्रसरागप्रवृत्ते, वन्देवलाया वपुरन्यपूरम् ॥२॥[२]
वक्रोक्ति—बालेदेहिपयोधर नवलल प्रावृट्त्वया याच्यनाम्
प्रादेपामिर्दंचि विधेहि न दानीतस्यास्मि किन्तु स्वसा ।
घास्तापुत्तरमतदीन्गघर याचामि बाधा स्वपम,
नास्त्यर्थाद्दि परयाचयति मदुमि पदमयिनादि श्रियम ॥१॥[३]
काव्यलिङ्ग—त्वमम्बदानीति रिमत्रचिनम
त्वद्वासदेशेऽपि न लाम वार्ता ।
निदन्त तत्र भवन् निवास
सवस्वन्गायी स कृपाद्रि नाथ ॥१॥[४]
शब्दालङ्कारचित्रमपीरचना चात्र । तथा च—
गोमूत्रिका—यमलेदेवदेवस्य महिषीत्व स्तुता रमे ।
विमले दविन्देहम्य ह यहिषत्व नतास्मत ॥१॥[५]
पदपादानुलमिप्रतिलोम—
घालीनाननीलाका राधिताहिहिताधरा ।
या मा सा मामामाया कापि दीपप्रदीपि का ॥१॥[६]
मुरज बन्ध—
इन्दिरा मासुरापदममन्दिराधपरापहा ।
हविरादयहरादप्त्या सापगमासुरान्हन ॥१॥
सवनोभद्र—
रमासदादास मारमानन्दा-नमनानना ।
सदादाया या दानसदा नया ममयानया ॥१॥[७]
श्लेषोज्जीवित रूपकम—
अखिलजगन्मातोमा तमसा तापेन चाकुलानस्मान् ।
अनुगृहणात्वनुकम्पा सुधारस्याहसितया च श्रियाण ॥१॥[८]

---

१ लक्ष्मीसहस्र ८।११
२ तत्रैव ८।७१
३ तत्रैव ६।४४
४ तत्रैव १३।६
५ तत्रैव २२।३
६ तत्रैव २२।८
७ तत्रैव २२।२४
८ उमासहस्र, १।१।११ पाण्डिचेरी १९४३

उल्लेख —दातु प्रभु सान्त्वयितुसमय क्तु क्षमस्तनजयितु च शक्त ।
सरम्भता चेते च सवब दय करस्तुपाराशुभृताग्रहीत ॥२॥[1]

सार — श्रमताशु विम्बसारात भूयोऽपि विनिगताभृश सूक्ष्म ।
सारो गौरी बदनात दरहासोऽस्त्वतु दु ख जालन ॥१॥[2]

मालोपमा —वर्षा पयोदपटलस्य सान्द्रतर-सूयातमजोर्मि चयनिम्न तुगता ।
कालाहि भूमि प्रतिदीघता च ते वेणेपुमगभुवनेश्वरि नयम ॥१॥[3]

दृष्टान्त — छिन्नानि नो क्ति शरीरमता निरासि
तत्पूज्यत जगति रेणुकमवशीपम् ।
क्ना क्लेवरवता क्तिनामयो न ।
धेनो धुनोति सुरभिम गनाभिरेक ॥१॥[4]

मृगनाभिचेतोधु वतो बिम्ब प्रतिबिम्ब भाव ।

अनुमानालकार—

विदितमहिमविश्वाधानादनेकविधादभुतम् ।
प्रथितचरित शर्वाणाक प्रताप विवधनात ।
प्रकटितगुण पाप वान्तप्रसार निरोधत
प्रदिशतु शिवाह्वामो मासो निधि कुशलानि मे ॥१॥[5]

अपह्नुति—

न्याप्यश्मि न्नो भुवन य एव
प्रायेण तस्यामलचन्द्रिकामृत ।
मन्दस्तवर्ति स धुनोतु हासो
निश्शेष नोक्दवर बल्लमाया ॥१॥[6]

इत्थ चोदाहृतोद्धरणेभ्य स्पष्टमेवावगम्यतयस्तोत्र-साहित्ये प्राय समपा प्रधानालकाराणा प्रयोगोजात । छन्दोदष्ट्याऽपिलघुदीघवत्ताना प्रयागोऽभूद्य थाऽनुष्टुप मालिनी हरिणी शिखरिणी—भुजग प्रयात वसन्त तिलकमन्दा क्रान्ता तोटक रथोद्धतान्वित्ताना प्रयागाऽभन । रीतिपु गौडी वदर्भी पाचालीनाम प्रयोग । गुणेपु प्रासादोजोगुणादीनाम । लघुपन्दाना समासबहुलाना च प्रयोग स्तोत्र साहित्ये समुपलभ्यते । वाग्वदग्यमनल्परूपण दश्यते । तथा च —

१ क्मासहस्र २।१।१४
२ तत्रव १।४।१
३ तत्रव ३।२।१
४ तत्रव ७।४ ८
५ तत्रव ६।२।१।३४
६ तत्रव १ ।३।१

हास्यं न लोके, मयि किंचिदस्ति
हास्यास्पदं यत्स्वयमेव जातं ।
किन्तु त्वदग्रे शरणागतानाम् ।
हास्यं हि तावेषु महाननर्थ ॥१॥[1]

अन्यच्च—

स्वरेवयद्यपिगतोऽहमध श्रुकूपे,
तत्रापिनाथतव नारम्यवलेपपात्रम् ।
दृप्त पशु पतति यदि स्वयमन्धकूपे ।
नोपेक्षते तमपि करुणिको हिताय ॥१॥[2]

अन्यत्रापि—

अभूतपूर्वं मम भाविकिंवा, सर्व सहे मे सहजहि दुःखम् ।
किन्तुत्वदग्रेशरणागतानाम् पराभवो देव न तेऽनुरूपम् ॥१॥[3]

## स्तोत्रेषुदार्शनिक-पक्षा

पूर्वाध्यायानां साधारण दृष्ट्याऽपि विवेचनेनेदम् सम्यक्रूपेणनानुभवयते यत्स्तोत्राणां रचनासु व्यक्तिविशेषाणां विशिष्टप्रवृत्तिर्भवति । सा चात्रजिनामु ध्यानानिमेनाच्चतुर्विधा । तत्रापि कानिचिद् व्यक्ति विशिष्ट रचितानि काव्यमयानि । तत्रस्तोत्रत्वापेक्षया काव्यपक्षस्य प्रधानता कानिचिच्चपुराण पठितानि तत्र प्रकरणागत कथासम्बद्धानि । तान्त्रिकानि च स्तोत्राणि व्यक्तिप्रधानानि । कानिचिच्चाचार्यविशेषरचितानि यत्र भक्त्या साकं तत्तत्सम्प्रदायाचार्याणाम मतानामुल्लखोविशेषेण । यथा चाचार्य शंकर यामुनवल्लभरामानुजरामानन्दादीनामाचार्यवराणाम । तत्र च सम्प्रदाय प्रवर्तकाचार्याणाम् रचनासुतत्तद्दार्शनिकमतोपलब्धिर्नस्वाभाविकी । खण्डनमण्डने स्वतन्त्र रूपेण वाऽयेषास्तोत्र-कराणाम मतेष्वपितत्त मतानुकूल सांख्ययायवशेषिकादीनाम शैव शाक्तादीनां च मतानि नामत स्वरूपतो वा चर्चितानि ।

एवं चात्र प्रकरणे संक्षिप्तसरण्या स्तोत्र निर्दिष्टदार्शनिकपक्षा सर्वेषि तव्या भविष्यन्ति । तत्रादौ बहुजनसमादृत प्रचारित व्याप्तिचिन्तनदृष्ट्या प्रधानत्वेनाद्वैतमतमेव समुपस्थाप्यते । अद्वैताचार्याणां आचार्यशंकराणाम स्तोत्र साहित्येऽपि महत्त्वपूर्ण स्थानमिति नाविदितं कस्यचित्सचेतसस्तेषाम् ७४ स्तोत्र

---

१ जगदीशतवे ७१ श्लोक स्तोत्रार्णवे
२ संस्कृत साहित्य इतिहास, श्री बलदेव उपाध्याय, पृ० १
१ स्तोत्ररत्ने

मणि—प्रकाशितानि किं तु शतद्वय यावत्सन्तीति[1] गोधकर्तारस्तत्तदग्रन्थेषु निर्दिष्टमतोऽप्यादावद्वैतमेव चच्यते ।

अद्वैतवाद —

न द्वैत भेद इत्यद्वैतमतसिद्धान्तानुसार जगत परमतत्त्वमेकमेव । तच्च ब्रह्मशब्देनाभिधीयते । तथा च—

तेषा द्वैतिना द्वैतदृष्टि । यस्मात्मद्वैतदृष्टि स्तरस्मान्नीयोऽय वैदिक सर्वानन्यत्वात । आत्मैक्यपक्षपातो न विरुध्यते यथा स्वहस्तपादादिभिरिति ।[2]

आचार्य शकर मत यथा मृद विभिन्न वस्तूनि घटादीनि उत्पाद्यन्ते यथैकस्यैव स्वर्णस्य विकारा कङ्कणादि मुद्रिकान्यस्तथैवैकस्यैव परमात्मनोब्रह्मणो विवर्त जगत । तथा च—

यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ति तदब्रह्मेति ।

विवर्त — अतत्त्वतोऽन्यथा प्रथा विवर्तइत्युदाहृत ।

अध्यास अतस्मिंस्तदबुद्धि

इत्थमत्र यत्र तत्र शंकर स्तोत्रपूपलभ्यते यद्यपि भक्तिर्द्वैते एव विशेषेण सम्भवति तथापि श्रीमत्पूज्यपादाचार्य शङ्करो ज्ञानप्राप्तयेऽद्वैतबोधाय भक्ति निर्बाधरूपेण स्वीचकार । एकस्मादेव निर्गुण निर्विकार निर्विकल्पकब्रह्मणो जगदेतद व्यवतत । तथा च गणेशाष्टके—

यतोऽनन्तशक्तेरनन्ताश्च जीवा यतो निर्गुणादप्रमेया गुणास्ते ।
यतो भाति सर्व त्रिधा भेदभिन्न सदा त गणेश नमामो भजाम ॥१॥
यतोवेदवाचो विकुण्ठामनोभि सदा नेतिनेतीति यत्ता गृणन्ति ।
परब्रह्म रूप चिदानन्द भूत सदा त गणेश नमामो भजाम ॥२॥[3]

गणपतिस्तवे च ब्रह्मण स्वरूपमद्वैतमुक्तम ।

अजनिर्विकल्पनिराकारमेक निरानन्दमानन्दमद्वैत पूर्णम् ।
परनिर्गुण निर्विशेषनिरीह परब्रह्मरूप गणेश भजाम ॥१॥[4]

एवमेव गणेशमहिम्निस्तोत्रे प्रथमश्लोके[5] वीरेश्वरस्तोत्रे प्रथम तृतीययोन केवलमेकस्मादब्रह्मणो, जगत विवर्तोऽपि तु भ्रमस्य स्वरूपमपि शंकराचार्य मतानुसार प्रतिपादितम तथा च—

---

१ शकर का मायावाद डा रामभूति रचना प्रकरण
२ माण्डूक्यकारिकाभाष्य ।१७ १८
३ बृहत्स्तोत्ररत्नाकरे गणेशाष्टके १ ७
४ बृहत्स्तोत्ररत्नाकरे गणपतिस्तवे १ २
५ तत्रैव प ६

रज्जौसप शुक्तिकाया च रौप्य पय पूरस्त मृगारयेमरीचौ,
यदवतविष्वभेवप्रपचो यास्मिनाते त प्रपद्ये महेशम ॥१॥[1]

विष्णु महिम शिवमहिमस्तोत्रयोश्च समेपा दशनानाम नामग्रहपूवक-मुल्लेखकृत्वैकत्व प्रतिपादितम । तथा च—

यदाहुब्रह्म केपुम्पमितरेकमच परेऽपरेबुद्ध चाये शिवमहिमधातारमपरे।
तथा शक्ति केचित गणपतिमुताक च सुधियोमतीना व भेदात त्वमसि
तदेनैपमम मति ॥१॥[2]

शिवमहिम्नि च प्रसिद्धदनाव 'त्रयी साख्य योग [3] अध्यात्मरामायणीयरामगीताया चाद्व तमेव बहुधा सन्निप्तरुपणोपन्यस्तम । प्रथम तावत्कर्मणेप्यानानस्यप्रधान्यम कमनाशश्च विचयवभवनि । तथा च—

त्रियाशरीरोदमवहेतुराहता प्रियाप्रियौ तौ भवत सुरागिण ।
धर्मेतरौनत्रपुन शरीरक पुन त्रिधा चक्रवदीयते मन ॥१॥
अज्ञानमेवास्यहिमूल-कारण तद्धानमेवात्रविधौविधीयते ।
विद्यवत नाशविधौपटीयसी न कमतज्ज सविरोधमीरितम ॥२॥[4]

कमत्याग —

तस्मात्यजेत्कायमशेपत सुधी, विद्याविरोधान्नतु सप्रयोगत ।
आत्मानुसधानपरायण सन्ना निवत्तसर्वेंद्रियवत्तगोचर ॥१॥[5]

कमत्यागे तत्तरीय वाजसनयो श्रुत्यारपि प्रमाणम तथा च—

सा तत्तरीयाश्रुतिराहसादर न्यास प्रशस्ताखिलकमणा स्फुटम ।
एतावदित्यहि च वाजिना श्रुतिर्ज्ञान विमोक्षाय न कर्मसाधन ॥१॥[6]

तत्तरीये—'न कर्मणा न प्रजया धेनन त्यागेनक अमृतत्वमानशु ।' [7]
वाजसनमे— एतावदरेखल्वमृतत्वम ।' [8]

तत्त्वमसीत्यादिवाक्यविचारोऽप्यद्व तरीत्याध्यात्मरामायणीय स्तोत्रे पदाथ वाक्यार्थलक्षणादि विवादास्तथा च—

श्रद्धान्वितस्तत्त्वमसीति वाक्यत गुरो प्रसादादपिशुद्धमानस ।
विज्ञायचकात्म्यमथात्मजीवया सुखीभवेन्मेरुरिवप्रकम्पन ॥१॥

---

१ वृहत्स्तोत्ररत्नाकरे प २७ श्लोक ३ वीरेश्वर स्तोत्र
२ तत्रव प ६५ विष्णमहिम्न
३ शिवमहिम्न श्लो ७
४ अध्यात्मरामायणे ८ ६ श्लोक रामगतावा वा० १७४
५ तत्रव १७
६ अध्यात्मरामायण २१
७ तै आ प १।१
८ बृ उ ४।५।१५

यादौ पदार्थावगतिर्हि कारणं वाक्यार्थविज्ञानविधौ विधानतः ।
तत्त्वं पदार्थौ परमात्मजीवकावसीति चैकात्म्यमथानयोर्भवेत् ॥२॥
एकात्मकत्वाज्जहती न सम्भवेत् तथा जहल्लक्षणता विरोधतः ।
सोऽयं पदार्थौविभागलक्षणा युज्येत तत्त्वं पदयोरदोषतः ॥३॥[1]

एवमेव २८ तममारभ्य पञ्चीकरणोपाधिजाधोव्यामादि निरूपणं ४२तमं यावत्। तत्राध्यासो यथा—

यद्यद्यत्रविभाव्यते भ्रमवशात्तत्तत्तस्मिन्नप्यारोपितं ।
प्रसवभूतश्च हि विभावनं यथा रज्ज्वादिष्विद्दृश्यते जगत् ॥१॥[2]

तत आत्मचिन्तनं ४८तमं यावत्। आत्मस्वरूपनिर्णयः ५५ तमतः ५८ तमं यावत्।

भागवतीयगर्भस्तोत्रपावनासनकृत-श्रीकृष्णस्तोत्रं विप्रपत्नीकृतं श्रीकृष्णस्तोत्रं चकात्म्योपदेशः श्रीशङ्कराचार्यकृतानि निर्वाणदशकनिर्वाणपदकात्मपञ्चककौपीनपञ्चकादीनि। तत्त्वमसीत्यादिस्तावत्सु बहुसंवादो वर्तते। तथा च—

अहं निर्विकल्पो निराकाररूपो विभुर्व्याप्य सर्वत्र सर्वेन्द्रियाणाम् ।
न चासङ्गतं नैव मुक्तिर्न मेयश्चिदानन्दरूपः शिवोऽहम् ॥१॥[3]

भ्रमो यथा—

रज्ज्वज्ञानवदमातिरज्जुर्यथाहि
स्वात्मज्ञानादात्मनो जीवभावः ।
आप्तोक्त्याहि भ्रान्तिनाशे स रज्जु
र्जीवोनाहं देशिकोक्त्या शिवोऽहम् ॥१॥[4]

श्रीशङ्करकवचेऽपि—

महेशं परमं ब्रह्म शान्तं सूक्ष्मं परात्परं ।
सर्वान्तरं सर्वसाक्षी चिन्मयस्तमसः परं ॥१॥[5]

श्रीजीवदेवरचित भक्तिविजयतीस्तोत्रे—

सत्यं ज्ञानमनन्तमक्षममलं ज्योतिः स्वतोभास्वरम् ।
ब्रह्मानन्दघनं परं गुरुमुखाद्विज्ञाय यद्वा नतः
सद्यः स्मेरसरोजसुन्दररसं लक्ष्म्या मुदाभासितम् ।
तद्विष्णोः परमं पदं हृदि सदा पश्यन्ति यत्सूरयः ॥१॥[6]

---

१ रामगीतायाम् २४।२७
२ तत्रैव ३७
३ निर्वाणाष्टक ६ श्लो
४ आत्मपञ्चके २
५ स्तोत्रार्णवे प ११६ श्लो १८
६ तत्रैव प० ४७७ श्लो० ६

श्रीगणेशपूर्वतापिनी —

जगतः सर्गादाद्यात प्रागप्यनस्त्वमेवमासि विभो ।
तस्मादगणप भवन्त निखिलनिदान वदन्तिनिगमान्ता ॥१॥
त्वमतो मायातीत सकलजगत्कल्पनाद्यधिष्ठानम् ।
अद्वैतसीमभूतमवाङ्मनसागोचर पर ब्रह्म ॥२॥[1]

श्रीभक्तिसम्बर्धनस्तोत्र—

जात जात खलुजगदहोचित्रमेतत्समस्तम,
क्षीण क्षीण मुहुरपिपरादृश्यते यत्प्रभावात ।
तस्मैसाक्षात्स्वरसपरमानन्दवीचिमयाय
ब्रह्माख्याय त्रिभुवनपते देव तुभ्य नमोऽस्तु ॥१॥[2]

श्रीकृष्णमङ्गलस्तोत्र च—

सर्वेसदा साभ्यलापा परमण,
प्राहुस्तात्पर्येण यदद्वैतमखण्डम् ।
ब्रह्मासग प्रत्यगभिन्न पुरुषाख्यम,
तस्मैश्रीकृष्णाय नमो मगलधाम्ने ॥१॥[3]

एव यत्र तत्र सवत्र स्तोत्रेष्वद्वैतवेदान्त प्रतिपाद्यसिद्धान्ताना निर्देशा सन्ति ।

विशिष्टाद्वैतम्—

विशिष्ट चतदद्वैतमिति चतनाचेतनविशिष्टब्रह्मणएकत्वमितिभावाय । इत्य च न केवल ब्रह्मणोऽपितु जीवात्मनोजगतश्चापि सत्यतत्त्वय । तत्त्वमसीति महावाक्य तस्य त्वमिति षष्ठीतत्पुरुष समासो जीवब्रह्मणोरशाशिभाव-सम्बन्ध । तथा च यामुनाचाय कृत-स्तोत्र रत्ने—

न धमनिष्ठोऽस्मि न चात्मवेदी न भक्तिमास्त्वच्चरणारविन्दे ।
अकिंचनोऽनन्यगति शरण्य त्वत्पादमूल शरण प्रपद्ये ॥१॥
ननिन्दित कर्मतदस्ति लोके सहस्रशोयन्नमयाव्यधायि ।
सोऽह विपाकावसरे मुकुन्द क्रन्दामिसम्प्रत्यगतिस्तवाग्रे ॥२॥
अभूतपूर्व ममभाविकिंवा सवसहऽह सहज हि दुखम ।
किन्तु त्वदग्रे शरणागताना पराभवो देव न तेऽनुरूपम ॥३॥
ननु प्रपन्न सकृदेव नाथ तवाहमस्मीति च याचमान ।
तवानुकम्प्य स्मरत प्रतिज्ञा मदेकवर्जकिमिति व्रजते ॥४॥[4]

---

१ स्तोत्रार्णवे पृ २१ श्लोक ४ ५
२ तत्रैव पृ ४६३ श्लो १
३ तत्रैव ५६४ श्लोक १
४ स्तोत्ररत्न (यामुनाचाय) १६ २२

अत्र मते शरणागते (प्रपत्ते) आवश्यकत्वं सा च भवतरनिवायमगम अन्यत्र च रामानुजाचार्य —

पितरम मातरम दारान पुत्रा वधू सखी गुरुन ।
रत्नानि धन धान्यानि, क्षत्राणि च गृहाणि च ॥१॥
सर्वधर्मांश्च सत्यज्य, सर्वकामाश्च साक्षरान ।
लोकविक्रान्तचरणौ शरणं तं व्रज मविभो ॥२॥[1]

भगवतो भक्तिरेव मुक्तिस्तथा च मुकुन्दमालायाम—

मुकुन्द मूर्ध्ना प्रणिपत्य याचे भवन्तमेकान्तमियन्तमर्थम ।
अविस्मृतिस्त्वच्चरणारविन्दे भवे भवे मेऽस्तु तवप्रसादात ॥
आनन्दगाबिन्दमुकुन्दराम नारायणानन्तनिरामयेति ।
वक्तुं समर्थोऽपि न वक्ति कश्चित अहो जनानां व्यसनाभिमुख्यम ॥[2]

अन्यत्रापि—

यो राज्यपालनकृते मणिपादुके स्वे
दत्वा नताय भरताय च सास्त्रपूर्वम् ।
पुर्यै निवर्त्यममूत परम प्रहृष्ट
तं रामं मार्तिहरणं शरणं भजामि ॥१॥
यः पुष्पकं समधिरुह्य वधूसहाय
साकं निजानुजविभीषणभानुसूनि ।
अन्य हरीन्द्रनिकर स्वपुरी प्रतस्थे,
तं राममार्तिहरणं शरणं प्रपद्ये ॥२॥[3]

द्वैताद्वैतवाद —

श्री निम्बार्काचार्य प्रवर्तितेऽस्मिन्सम्प्रदाये द्वैताद्वैतभेदाभेद वाद एवास्योपलब्धि निम्बार्क सम्प्रदायीयस्तोत्रेषूपलभ्यते । तथा च—

*ज्ञानस्वरूपं च हरेरधीनम शरीर संयोगवियोगयोग्यम ।*
*अणुं हि जीवं प्रतिदेहभिन्नम ज्ञातृत्ववन्तं यमनन्तमाहुः ॥*[4]

विशुद्धाद्वैतम्—

आचार्य वल्लभाऽस्य प्रवर्तक पुष्टिमार्ग इत्यपरनाम्ना प्रख्यातमत्रब्रह्म साकार सर्वशक्तिमत् सच्चिदानन्दरूपश्रीकृष्णस्य सायुज्यमेवमुक्ति दाम्पत्यभावेनाराधना । साम्प्रदायिकाचार्य प्रणीतस्तोत्रेषु मतमिमुपलभ्यते यथा रासक्रीडा

---

१ हिन्दुत्वे पृ० ६२६ रामदास गौड
२ बृहत्स्तोत्ररत्नाकरे मुकुन्दमालायाम ४ तथा २१
३ स्तोत्रार्णवे प० २१३ श्रीरामप्रपत्तिशतके २६ ८७
४ हिन्दुत्वे प० ६७१ निम्बार्काचार्यरचिते

गोपी-युगलगातेषु श्रीकृष्ण प्रमामृत रसायन स्तोत्रेषु च—

सुधानिर्यासनयन सुन्दर श्यामलाकृति ।
नवयौवनसम्पन्न श्यामामृतरसार्णव ॥१॥
व्रजयापि सदाहृदयो, गोपीलोचन-तारक ।
जीवनानन्दरसिक पूर्णानन्द-कुतूहल ॥२॥
वल्लवीवदनाम्भोज मधुपानमधुव्रत ।
निगूढरसवदगोपी चित्ताह्लाद कलानिधि ॥३॥[1]

अचिन्त्यभेदाभेदवाद —

चैतन्यसम्प्रदायस्यनामान्तरमिद चैतन्य महाप्रभुनकेवलमस्य प्रवर्तकं त्वेनापितु श्रीकृष्णभगवत प्रेमावतारत्वेन प्रसिद्ध । रूपगोस्वामि जीवगोस्वामि सनातनगोस्वामिप्रभृतीना स्तोत्रेष्विद समुपलभ्यते । श्रीस्तव कल्पद्रुमे मतम्यास्य स्तोत्रबहुलम । यथा चैतन्याष्टकगौरांगाष्टकम् श्रीकृष्ण चैतन्यनामस्तोत्रम, श्रीकृष्ण चैतन्यसहस्रनामस्तोत्रादीनि । यथा—

मत्यानुकम्पासुखदा जनाना ससार कूपात्प्रगुनाथदासम ।
उद्धृत्य गुंजाशिलयाददौ यस्त गौरचन्द्र प्रणमामिनित्यम् ॥१॥[2]

अन्यच्च— मधुरमधुरमेतद्वृष्णवाना चरित्रम ।
कलिमलकतहीनान बोधबुद्ध्या न जग्मु ।
सकल निगमसार नामदात् चतन्य ।
प्रबल-करुणया श्री गौरचन्द्रोऽवतीर्ण ॥१॥[3]

रामानन्द-सम्प्रदाय —

विशिष्टाद्वैतवाद विशिष्टे च विशिष्टे च विशिष्टे तयोरद्वैतमिति विग्रह्य महात्मा देनभगवता रामानन्द मननीय नरहरिदासादीना स्तोत्रेषु दृश्यतेऽयं वाद । तथा च—

श्री चिन्तकारी धाता परम सुखद पावनतनु ।
मुनीन्द्रयोगीन्द्रयतिपतिसुरेन्द्रहनुमता ।
सत्य सर्व्य पूर्ण जनकतनयागरसुरगुरु ।
रमानाथो रामो रमतु ममचित्ते तु सततम ॥१॥[4]

अन्यत्रापि— निष्प्रपचनिर्विकल्प निर्मल निरामयम् ।
चित्स्वरूप सततम् भजेऽह राममद्वयम ॥२॥[5]

---

१ श्रीस्तवकल्प मे श्रीकृष्णप्रमामतस्तोत्र ६ २५ २७
२ श्रीस्तवकल्पद्रुमे गौरांगलीलास्मरणमगलस्तोत्रे श्लोक ६४
३ तत्रैव श्री चैतन्य शतके पृ २११ श्लो ४५
४ बृहत्स्तोत्ररत्नाकरे श्री रामचन्द्राष्टके १ पृ० १८६
५ बृहत्स्तोत्ररत्नाकरे श्रीरामचन्द्राष्टके च १८८

एवमेव सीतारामाष्टकं रामसहस्रनामाष्टोत्तरशतनामशतस्तोत्रे श्रीराम सारावल्यादिस्तोत्रेषु श्रीमद्वाल्मीकीयपरिमवध्नस्तोत्र तथा च—

परमात्मा परब्रह्म सच्चिदानन्द विग्रह ।
मायामयमहालील स्वयम्भूर्विष्णुरव्यय ॥१॥[१]

अन्यदर्शनानि—

न्याय—वेदान्तवादस्तु स्तोत्रेषु पदेपदेऽवाप्यते परमन्यदर्शानिकपदा अपि समुपलभ्यन्ते एव तथा च न्यायदर्शनम् शिवमहिम्नस्तोत्रे—

किमीहः किंकायः स खलु किमुपायस्त्रिभुवनम् ।
किमाधारो धाता सृजति किमुपादान इति च ।
अतर्क्यैश्वर्ये त्वय्यनवसर दुःस्थोहतधियः
कुतर्कोऽयं कांश्चिन्मुखरयति मोहाय जगताम् ॥१॥
अजन्मानो लोकाः किमवयववन्तोऽपि जगताम्,
अधिष्ठातारं किं भवविधिरनादृत्य भवति ।
अनीशो वा कुर्याद् भुवनजनने कः परिकरो
यतो मन्दास्त्वां प्रत्यमरवर संशेरत इमे ॥२॥[२]

अत्रानुमानेन क्षित्यङ्कुरादिकं सकर्तृकं कार्यत्वाद् घटवादित्यनुमानानुसारमीश्वरसिद्धिः कृता ।'

सांख्यम्—नमोमूलप्रकृतये नित्याय परमात्मने ।[३]

अन्यत्रतत्त्वानां चर्चापि—

पृथिवीं पातु मघ्राणे पातुम रसना जलम् ।
रूपं हुताशनं पातुस्पर्शो पातु च मारुतम् ॥१॥
श्रोत्रमाकाशमप्येतु मनोवैकारिकं पुनः ।
इन्द्रियाण्यपि सयान्तु स्वास्वा योनिं यथायथम् ॥२॥[४]
पृथिवी पातु सलीलमापोऽग्निमनलोऽनिलम् ।
वायुराकाशमप्येतु मनश्चानारा एव च ॥१॥
अहंकारं मनो पातु मोहनं सर्वदेहिनाम् ।
अहंकारस्ततोबुद्धिं बुद्धिरव्यक्तमेव च ॥२॥
प्रधानप्रकृतिं याते, गुणसाम्ये व्यवस्थिते ।
वियोगं सर्वकरणं गुणभूतस्तु मे भवेत ॥३॥[५]

---

१ श्रीस्तोत्रार्णवे प० २३२ श्रीरामसहस्रनामाष्टोत्तरशतस्तोत्रे
२ शिवमहिम्नस्तोत्र ५ ६
३ स्तोत्रार्णवे पृ० २५३ श्रीरामविश्वरूपस्तवे श्लो० ३२
४ स्तोत्रार्णवे पृ ३४३ कृष्णानुस्मृति स्तोत्र ५ ५१
५ तत्रैव ३४६ कृष्णानुस्मृतौ श्लो० ५१ ५५

योग —

नोद्घाटयति कपाट स्वाम्यादेशविना प्रवेशाय ।
तद्वन्नोदघाटयति स्वाधिष्ठानादि निजकपाटानि ॥१॥
मव शरीरे शरीरमूलाधारस्थिताहि कुण्डलिनी ।
आवत्यसर्वाधारान मृदभाण्डमिवास्तिमूलवह नेया ॥२[१]

एव च दिङमात्रोदाहरणरेव स्पष्ट प्रतीयते यत्स्तोत्रसाहित्ये प्राय सर्वदर्शनानि सन्ति । न केवल नाम मात्रेणापितुमायताऽपि स्पष्टीकृता ।

## केचनस्तोत्रकारा

प्रत्यह जायमानानुसन्धानग्रन्थानाम्बाहुल्यऽपि महाखेदकरोऽय विपयो यतस्तोत्र कत णा विषय इतिहासो मौनमवालम्बते कतिपयनिजमहिम्नाख्याति मागतम्य आचार्यम्य कृत । केषाचित्स्तोत्रकाराणावत्तमत्र प्रस्तूयते ।

### १ श्रीमयूर

सस्कृत साहित्येगच शाखाया मूधन्यवाणभट्टस्यश्वसुर श्यालको वा काशीत पूर्वोत्तरस्यगोरखपुर जनपद सन्धजनिरयमद्यापितनास्य वशजा सन्ति । सप्तमशताब्दीयोऽयम् ६०६ ६४८ ।[२] कुष्ठरोगाभिभूत सूय तुष्टावसस्कृत-साहित्ये प्रसिद्ध प्रौढस्तोत्र-काव्यमिदम। सस्कृतभाषाया कवेरप्रतिमाप्रतिमा व्यक्त । गौडीया रीतिरोजागुणोनुप्रास प्रासित मत्र सन्ति श्लोका १०० । सूय किरण रयाश्व बिम्बवणनन साकम ब्रह्मा विष्णवादिभिरस्य तुलना कृता । अनुप्रासयमकापमोत्प्रेक्षादीपकतुल्ययोगिताव्यतिरेक विरोधाभासासमवायोऽत्र मनोहर ।

### २ श्रीहर्ष

सस्कृत-साहित्य परमा ख्यातिमागतस्यास्य विषय न किमपि बहु वक्तव्यम । बाणमयूराभ्यो स्यवसमासदा आसन् समयश्चास्य ६०६ ६४८ । सुप्रभात स्तोत्र अष्टमहापि चत्यस्तोत्र चास्य प्रधानग्रन्थौ ।

### ३ श्रीवाणभट्ट

स्वरचिरवण पलालिमनाया रसभाव समुज्वलाया जगमनोहारिण्या मधुराया रचनाया कृत प्रसिद्धोऽय चण्डीशतकमस्य प्रसिद्ध स्तोत्रग्रन्थ स्रग्धरा-

१ तत्रैव गणशपूर्वतन्त्रे पृ० ३१७ श्लो ६३६६
२ सस्कृत साहित्य का इतिहास पृ० २६४ श्री बलदेव उपाध्याय १६४ काशी

वृत्त भगवत्या दुर्गाया मनोहारिवर्णनम समासानालम्बायमानताकर्णकुहरानाप्याय मानाच्चात्प्रेक्षा मनोहरति । तथा च—

विद्राणेरुद्रवृन्दे सवितरि, तरल वज्रिणि ध्वस्तवज्रे
जाताशङ्के शशाङ्के विरमति मरति त्यक्तवरकुबेरे ।
वैकुण्ठे कुण्ठितास्त्रे महिषमतिरुषं पौरुषोपघ्ननिघ्नम् ।
निर्विघ्नं निघ्नतीव शमयतु दुरितं भूरिभावा भवानी ॥१॥[1]

## ४ आचार्य शङ्कर

स्वदर्शनमक्ति-सम्वलितग्रन्थरत्नराशामारप्रसिद्धिगतानामाचार्य - वराणा मतिह्य वृत्त न निर्विवादम् । सामान्य-जनाना प्रवत्तिमशोम्लिकामवस्यतस्त विस्तरेण स्वरचनाया स्वजीवनवृत्तमुल्लिखन्ति । आचार्यवराश्च नतादृगोऽत स्तेषा कालनिर्धारणे महा वादश्चलति । तथा चास्य समय—

| | | |
|---|---|---|
| १ | अस्य समय[2] | ७०० ई० |
| २ | केरलोत्पत्ति ग्रन्थानुसारम्[3] | ४०० ई० |
| ३ | द्वारिकाकाचीकामकोटि पीठानुसारम्[4] | ५०० |
| ४ | तलम दृष्ट्या[5] | ६०० |
| ५ | सर आर० बी० भण्डारकर मतानुसारम्[6] | ६८० |
| ६ | बर्नेल सिर्वेलाचार्य[7] | ७०० |
| ७ | लोबिसरिस मतम्[8] | ७४० |
| ८ | मोक्षमूलरमैकाडानलप्रभृतय[9] | ७८८ |
| ९ | वेंकटेश्वराचार्याणाम् मते[10] | ८०५ ८९७ |

स्तोत्राणि—आचार्यप्रवर रचित स्तोत्राणा सख्या २४० यावत्सन्ति पर प्रकाशित रूपेण ७० गणेशस्य ४ शिवस्य १८ देव्या ११ विष्णो १० युगल देवताया ५, नदीतीर्थादीनाम् ५ साधारणानि ६ । स्तोत्रप्रकरणे दर्शितानि चर्पटपञ्जरिकाद्वादशपञ्जरिका षटपदी, मनीषापञ्चकसौन्दर्य लहरी-सोपानपञ्चका दीनि च ।

---

१ स० सा० इतिहास पृ० २६९ ब दे उपाध्याय
२ तत्रैव
३ ४ शङ्कराचार्य डा० राममति शर्मा मेरठ १९६४ पृ० ६
५ तत्रैव १ ४
६ रिपोतार्ज आफ दि रिसर्च फार सस्कृत मेनिस्क्रिप्ट १८८२ पृ १५
७ साउथ इण्डिया बलग्राफी प १७
८ तत्रव प १०
९ तत्रव प० १
१० रिपोताज आफ दि रिसच फार सस्कृत मेनिस्क्रिप्ट १८८२ पृ० १५

## ५ आनन्दवर्धन

अस्य नाम संस्कृतसाहित्य स्वर्णाक्षरलेख्यम ध्वन्यालोकमस्य साहित्यशास्त्र मालाश्रयति । देवी शतकमस्य प्रसिद्धस्तोत्रग्रन्थ समयश्चास्य ८५५ ८८३ ।[1]

## ६ लीलाशुक

अष्टमशताब्दीकस्य पुद्दाद्दत भवनकेषु मूध यमावस्य द्वितीयस्य श्री विष्णु-स्वामिन शिष्य[2] दक्षिणप्रदेशेवीणानद्या तटवासी श्रीरामदासस्य पुत्रोऽस्यप्रसिद्ध[1] स्तोत्रग्रन्थ श्रीकृष्णकर्णामृतम । गोविन्दामोदरस्तोत्रमथ । द्वितीयश्रीस्तवकल्प द्रुम मुद्रितम प्रथम च पृथक प्रकाशितम । अस्य व्याख्यानशुकदेववदत एवाय लीलाशुकव्यपदेशमोक ।

श्रीकृष्णकर्णामृत महाप्रभु चैतन्यदेवस्य परम प्रिय स्तोत्रमासीदिति संस्कृतसाहित्येतिहास ।[3] श्रीकृष्ण दर्शन कामनाऽनन्यभावेनव्यक्तीकृता तथा च—

यावन्न मनरदशा दशामी दनोऽपि,
रन्ध्रादुदेति तिमिरीकृत सर्वभावा ।
लावण्यकेलिभवन तव तावदेतु ।
लक्ष्म्या समुत्क्वणित वेणुमुखेन्दुबिम्बम् ॥१॥[4]

भगवत श्रीकृष्णस्य ब्रह्मरूपेणे चर्चा तथा च—

श्री जानकी जीवनरामचन्द्र निशाचरारे भरताग्रजेश ।
जिह्वे पिबस्वामृतमतदेव गोविन्ददामोदरमाधवेति ॥१॥
नारायणानन्त हरेनृसिंह प्रह्लादबाधाहर हे कृपालो ।
जिह्वे पिबस्वामृतमतदेव, गोविन्द दामोदर माधवेति ॥२॥[5]

## ८ कुलशेखर

अयं त्रिवाङ्कुर राज्यस्य भूपतिरासीद दशम-शताब्दिको[7] वष्णवश्च धर्मस्यप्राचीनव्वन्यतमोऽनुयायी । केरलवास्तव्य केरलनरेशस्य दृढव्रतस्यपुत्र

---

१ सं० सा० इतिहास पृ० ३२० उपाध्याय काशी
२ हिन्दुत्व पृ ६७५
३ सद्गुरुशरण १४७ गीता प्रेस गोरखपुर १९६९
४ सं० सा इति उपाध्याय
५ श्रीकृष्णकर्णामृत ११ ८ संस्कृति अंक १४७
६ धारतद कल्पमे पृ० ६८ श्लो ६७ ६८
७ सं सा० इति उपाध्याय पृ० २६५

रत्नक्षेत्राभिजन तिरुपतिनिवासी[1] 'मुकुन्द माला स्तोत्रग्रन्थोऽस्य। वैष्णव स्तोत्रेषु मुकुदायमान श्लोका ६०श्रीस्तवकल्पद्रुम सग्रहीत।[2] परम हृदया वर्जकम्।

हे गोपालक हे कृपा-जलनिधह सिन्धुकन्यापते।
हे कंसान्तक हे गजेन्द्र करुणा-पारीण हे माधव।
हे रामानुज हे जगत्त्रयगुरो हे पुण्डरीकाक्ष माम्।
हे गोपीजन नाथ पालय पर, जानामि न त्वां विना ॥१॥[3]

## ८ पुष्पदन्त

भगवत शङ्करस्य नवरेषु स्तोत्रेषु शिरोमणिमिव राजतेऽस्य शिव महिम्न-स्तोत्रम्' राजशेखरेण स्वकाव्यमीमांसायामस्य श्लोकोद्धृत। शिखरिणी शिखरी कृतम् भावपूर्णम सक्षिप्तरेव शब्दगम्भीरार्थबोधनपरम्। दार्शनिक मस्य काल दशम शतकात्पूर्वम।[4]

## ९ यामुनाचार्य

वैष्णवसम्प्रदायस्य प्रधानाचार्य-नाथ मुने पौत्र ईश्वरमुन पुत्रश्चासी दयम अस्य जन्म १०१० वीरनारायणपुरे (मदुरायां) अभवदस्यालमन्दार स्तोत्रमतीवप्रसिद्धम। आचार्य रामानुजस्य गुरुरयम श्रीस्तोत्ररत्नमपरनाम—तथा च—

न धर्मनिष्ठो न चात्मवेदी न भक्तिमांस्त्वच्चरणारविन्दे।
अकिंचनोऽनन्यगति शरण्य त्वत्पादमूल शरण प्रपद्ये ॥१॥
न निन्दित कर्मतदस्तिलोके सहस्रशो यन्नमया व्यधायि
सोऽहं विपाकावसरे मुकुन्द क्रन्दामिसम्प्रत्यगतिस्तवाग्रे ॥१॥[5]

## १० उत्पलदेवाचार्य

शैवागमाकाशेकश्मीरेष्वनेका आचार्यतारा जातास्तत्रोत्पलदेवोमुख्य यश्चश्वीयनवम्या शताब्द्या उत्तरार्द्धवर्ती। अस्य कृतिषु नवग्रन्था प्रसिद्धि मागता तत्र 'शिवस्तोत्रावली स्तोत्रग्रन्थ। अद्वैतदर्शनस्यमूलाधारमुपलक्ष्मीकृत्य भक्तिभावस्य चरमाभि व्यक्तिरत्र। अयमाचार्य शैव शास्त्रस्य सिद्धान्तागमयोरु

---

१ हि स अक पृ १७३ गीता प्रेस गोरखपुर १९५५ तथा हिन्दुत्व पृ० ६४३
२ श्रीस्तवकल्पद्रुम पृ ३६३
३ तत्रैव ३७१
४ सन्त अङ्क गीता प्रेस गोरखपुर पृ० १५२
५ आलमन्दारस्तोत्र श्लोक २५ २६

मयोरपिपम्पयोर्नासीत। प्रत्येकस्नोत्रेवर्णनशली विलमणा। नवीनाचात्र विंशति स्नोत्राणाम। तत्र भक्तिविलाससवर्तिमपरिमावनप्रणय प्रसाद सरसोद्वलविजय विधुरादीनि मुख्यानि।[१] यागाद्यपक्षयाऽत्रभक्त प्रशसाविहिता। तथा च—

न यागो न तपानार्चा श्रम कोऽपि प्रणीयते।
भवाध शिवमार्गेऽस्मिन भक्तिरेनाप्रशस्यते ॥१॥[१]

## ११ रामानुजाचाय

विशिष्टाद्वैतसिद्धान्तभास्कराण भगवच्चरणारविन्दमकरन्दानामाचाय वराणा जन्म-दक्षिणभारते श्रीपेरम्बुदरग्राम जातमस्य पितुर्नाम केशवसोमया-जीमातुश्च कान्तिमती देवी आसीत। काचीनगरे श्री यादव प्रकाश सन्निधौ वेदान्तविद्यामध्यष्ट। परमासन्निमस्वगुरोरद्वतवादस्य विरोधिन। एषा स्तोत्र ग्रन्थ ' गद्यत्रयम्। विष्णु विग्रहदर्शनस्तोत्र रामपटलम्। [३] कालश्चास्य १०७४ वि० स०।[४]

## १२ श्री निम्बार्काचार्य

अस्या यन्नामनियमानन्द आसीदस्य जीवनादिविषयसन्त्यनेकमतानि। निम्बार्कसम्प्रदायमतानुसारमस्य काल पचम शताब्दी वतमानानुसन्धानपरायणा नामत्त धकान्दशताब्दी दक्षिणभारत गोदावर्यास्तटे वदुयपत्तनासन्नेऽरुणाश्रमेऽय स्वजन्मलेभे। अस्य पितुर्नामारुणोमुनिजगन्नाथोवास्यस्तोत्रग्रन्थ श्रीकृष्ण स्तवराज सरलया गिराम भगवत श्रीकृष्णस्न गुण वणनम् गुण वणन प्रसगे चाव स्वदशनमपि स्पष्टी चकार अणुवादोऽस्य प्रधान मतम्।
तथा च—

ज्ञानस्वरूप च हरेरधीनम्
शरीरसयोग वियोग जन्यम्।
अणुहिजीव प्रतिदेहभिन्नम्
ज्ञातत्ववन्त यदनन्तमाहु ॥१॥[५]

## १३ श्रीकृष्णमिश्रयति

एकादशशताब्दीक प्रबोधचन्द्रादय-नाटकस्यभक्तिपरकस्य रचयिता।

---

२ शिवस्तोत्रावल्याम् १९६४ चौ स० प्र० वाराणसी
१ तत्रव पृ० १।१८
१ हिन्दुत्वे ज्ञानमण्डल काशी पृ० ६१२
२ तत्रैव पृ ६४८
१ तत्रैव पृ० ६७१ १२२ सं० अंक

संन्यासग्रहणानन्तरं श्रीकृष्णानन्दयतिरस्य नाम यातम्।[१] बहूनां स्तोत्राणां रचयिता 'निगमसारसंग्रह तत्त्वमाममित्यादीनाम बृहत्स्तोत्ररत्नाकरेऽस्य नाम्नाऽ- ष्टस्तोत्राणि धृतानि।'[२]

## १४ श्री माध्वाचार्य

द्वैतमत प्रवर्तकस्य जगद्गुरोराचार्य माध्वस्य जन्म १२५५ वक्रमीये सन्ताकेलिखितम्[३] हिन्दुत्वे तु १२८६।[४] अस्यापर नामानन्दतीर्थ। अस्यपितुर्नाम मधिजीभट्टो मातुश्च वेदवतीत्यासीत। ग्रामश्च मद्रास प्रान्त वेलि 'वायोर्वेवस्या वतारभूतोऽयमिति। वासुदेव चार्यविदमधीतवानय द्वादशस्तोत्रमस्यग्रन्थ।

## १५ श्री वेंकटनाथवेदान्ताचार्य

पाचायरामानुजस्य ७४ शिष्येष्व यतमोऽनन्तस्तस्य पौत्रोऽनन्तसूरिरस्य पिता तोतारम्बा च माता। वेदान्ताचार्यस्यास्याविर्भाव १३२५ वक्रमीये वत्सरेऽभवत। ग्रामश्चास्य कान्चीपार्श्वके धूपिलग्राम अद्वैताचार्यविद्यारण्यस्याय सहपाठी। तिरुपाहिन्द्रपुरेऽयम बहुभिर्ग्रन्थ्य वसहानकस्तोत्राणि व्यरचयत तत्रा च्युतशतक गरुडपञ्चशती, त्यादीन अस्य मृत्युश्च १४२६ वक्रमीय अभवत। वरा ग्यस्य मूर्तिमान रूप परमभक्तो निरहङ्कार दार्शनिकताकवित्वयो परिपाको ऽस्मिन्नवभासते।[५]

## १६ जगद्धरभट्ट

संस्कृतसाहित्य-परिशीलन मनस्विमाना सहृदयाना नास्त्यविदित यत्कश्मीरप्रान्तोऽत्र महद्वैशिष्ट्यं वहति विशेषतस्तन्त्रसाहित्यव्याकरणशास्त्र दर्शनादि विषयेषु। भट्टोऽपि स्वज मननभव प्रान्तविभूषणमलञ्चकार। अस्य पिता मह श्री गौरधर पिता च रत्नधर। भगवत शङ्करस्यानन्यभक्त सनतन्त्र स्वतन्त्रश्चासीदयम। तथा च —

> अनन्तसिद्धान्त प्रथा तगामिन समस्त शास्त्रार्णवपारदृश्वन।
> ऋजुयजुर्वेदपदार्थवर्णना व्यनक्ति यस्यादमतविश्रुतश्रुतम॥१॥[६]

---

१ हिन्दुत्वे ६१४ स म १७२
२ बृहत्स्तोत्ररत्नाकरे २ ३ प० काशी संस्करणे
३ सन्त अंके प० १४७ गीता प्रेस गोरखपुर
४ हिन्दुत्व प० ६६३
५ तत्रैव ६५८ ६
६ स्तुति कुसुमांजली काशी २०२१, ६ १

अस्यस्थितिकाल १३५० ई० आसीत । स्वपुत्रयशोधरभट्टमध्यापयितु-व्याकरणग्रन्थमपि यलिखत बालबोधिनी कातन्त्रवत्तिनाम्ना । अस्यचित्सदगुरो करुणायाप्रेरितोभूत्वा स्वशिष्ये शक्तिपातमकरोत । यनाय ज्ञान शक्ति क्रिया शक्त्यो भाजन जात । तथा च—

कार कारमकारिवारितशमरक्षररक्षरिदम,
विघ्ने विघ्नित शम्भुसेवनसुखाभोगापभाग मन ।
किन्तु क्वापि कदापि कापि, पतिता सा माधुयदप्टियत ।
*प्राप्त सूक्तिवपु जितोर्जितसुधा स्वाद प्रसाद प्रभो ॥*[1]

अथ स्वरचनायाम भगवतो गुणानुवादमेवाकरोत हिन्दीभाषाया प्रधान कविस्तुलसीदासोऽस्यानुकरण कृत्वाबहुशोरचनामकरोत तथा च—

उष्णनि श्वसिति क्षितिविलिखति प्रस्तौति न प्रेयस
प्रीति सूक्तिमिरीशितु करतले धत्तेकपोलस्थलम् ।
वाग्देवी हृदयज्वरेण गुरुणा क्रान्ताहताशव या
नीतावश्यकृतकोपनिष्कम्प नृपस्तोत्रमपापान्तताम ॥१॥[2]

तुलसीदास *"कीन्हे प्राकत जनगुनगाना सिरधुनि गिरालागिपछिताना ।'*

अन्यच्च— एता पूर्वकविप्रणीत विविधग्रन्थामृतास्वादन
क्रीडाहुललितम् हरन्ति, हृदय वाच क्य धीमताम् ।
केषाचित्पुनरीश्वरस्तुतिपद व्याहार हेवाकिनाम्
मास्यन्ति स्पृहणीयता भुवि भवक्लेशस्पृशो मादशाम् ॥१॥[3]

तुलसीदास — भनिति मोर सबगुनरहित विश्वविदितगुन एक ।
सोविचारिसुनिहहिंसुमन जिनके विमलविवेक ॥

स्तोत्रापेक्षया काव्यत्वमस्यप्रधानम । भगवत्स्तोत्र पापराशीमुन्मूलयति तथा च—

मणि सुसूक्ष्मोऽपि यथोल्वणविष कशोऽपिवह्नि सुमहद्यथातृणम् ।
निशुम्भ गेन्द्रोऽपि यथागजव्रज, तनु प्रदीपोऽपि यथातमो भरम ॥१॥
यथाल्पमप्यौषधमुन्मद मद यथामृत स्तोकमपिक्षयाद्भयम्
ध्रुवतथैवाणुरपिस्तव प्रमोशणादघदीघमपिव्यपोहति ॥२॥[4]

अस्यभक्तिद्रष्टव्या—

---

१ स्तुतिकुसुमाञ्जली काशी २ २१ १६।१२
२ तत्रैव ५।३४
३ तत्रव ३।३६
४ स्तुतिकुसुमाञ्जली ७।८ १०

पापः खलोऽहमिति नार्हसि मा विहातुम्
किं रक्षया कृतमतरकुतोभयस्य ।
यस्मादसाधुरधमोऽहमपुण्यकर्मा
तस्मात्तवास्मि सुतरामनुकम्पनीयः ॥१॥[1]

केचिदलङ्कारा —(यमक)

भानुनातुहिनभानुनावहदमानुना च विनिवर्तितन यत् ।
तेनतज्झटितिशार्ङ्गतमातरे ध्वान्तमिति तदुपास्महेमहः ॥१॥[2]

शब्दश्लेषमूलध्वनि —

अम्बरेण गगनेन सम्वृत जीवनगिरिसवर्णितम श्रितम ।
भोगिभिश्चभुजगविभूषितं शंकरशुभकरं भजामहे ॥१॥[3]

एवमेव पञ्चविंशतिमस्तोत्रे चित्रकाव्यमकादीनि । अस्य कविता भक्ति परिपूरितहृदयस्योद्गारा अत्र श्लेषानुप्रास यमकाना सम्मेलनम् । सरसा सरला करुणारसाप्लाविता ।

## १७ श्रीचैतन्यमहाप्रभु

गौडीयवैष्णव सम्प्रदायस्य प्रवर्तकोऽस्य मतम अचिन्त्यभेदाभेदवादमूलकम्। कालान्तरेणायमेवास्य सम्प्रदायस्योपास्यश्च समजनि। श्रीकृष्णस्यावतार इति साम्प्रदायिका प्राविर्भाव १४०७ तिरोभाव १४५५ शकाब्द ।[4]

श्रीकृष्णभक्तीतनपरा श्लोका —

चेतोदर्पणमार्जनं भवमहादावाग्निनिर्वापणम
श्रेयः कैरवचन्द्रिका वितरणं विद्यावधूजीवनम ।
आनन्दाम्बुधिवर्धनं प्रतिपदं पूर्णामृतास्वादनम
सर्वात्मस्नापनं परंविजयते श्रीकृष्णसंकीर्तनम ॥१॥[5]

## १८ श्रीसनातनगोस्वामी

श्री महाप्रभुचैतन्यदेवस्य प्रधानोऽनुयायी जन्म सम्वत १४८८ ई० पितुर्नामकुमार देवामातुश्च रेवती भारद्वाजगोत्रीय मृत्यु १५५८।[6] वंगीयोऽयं रूपगोस्वामिनो भ्राता । एकदा झञ्झावातसमन्वितमेघाच्छन्नमसिबहिर्जगाम ।

---

१ तत्रैव ११।३७
२ तत्रैव १।७
३ तत्रैव १।२१
४ सन्त अंक १६३ गीता प्रेस गोरखपुर
५ तत्रैव पृ० १६३
६ तत्रैव पृ० १६५

पथिविवदमानयोश्चाण्डालदम्पत्यो स्त्री प्रोवाचास्मि कालेदुर्दिने श्वालासो वार्बहि-गच्छति नतर आकर्ण्यैदम्वत्तान्तमस्य हृदिवराग्यमजायत ।[1] अस्यश्रीकृष्ण लीलास्तव श्रीस्तवकल्पद्रुमे प्रकाशित । श्लोकाश्चात्र ४३ । स्तात्रमिद भागवतस्य सक्षिप्तवणनानुसारि ।[2]

## १९ श्रीमद्रूपगोस्वामी

श्रीसनातनगोस्वामिनोलघुभ्राता जन्मकाल १४६६, पिता कुमारदेवो माता च रेवती । भारद्वाजगोत्रीयोमृत्यु काल १५६३ ई० । अचिन्त्याभेदमतात्मक श्री गौडीय सम्प्रदायस्य प्रकाण्डाविद्वान ।[3] आदौ मुस्लिमरान कमकर श्री चतन्य महाप्रभुसम्पकतो विरक्तोऽभून । अस्यानरस्तोत्राणि श्रीस्तवकल्पद्रुमे प्रकाशितानि तेषु कानिचित आनन्दारयस्तोत्रमुकुन्दमुक्तावलीगोविन्दविरदावली राधिकाष्टकादीनि । ललित ललितरममरितम सानुप्रासम् श्रीकृष्ण-गुणकीतन-परमिदम ।

## २० श्रीलक्ष्मीधर

अस्य स्थितिकाल १५ शशताब्दीत किंचित्पूव । अस्यपितुर्नामश्रीनर्सिंह । अच्युतानन्द परमहसस्यशिष्योऽय[4] भगवत श्रीकृष्णस्य नाम महिमपरमस्य स्तोत्रम । भाषा सुललिता प्रसादा सरला प्रवाहमयी रचना । तथा च—

'नयनानन्दकर करम्बितकर हैयगवीननव
गोमामादधत नवीनजलदे मीलत्सुधाम्नो स्फुटम् ।
भक्ताना हृदयस्थित सततमप्याभीर दग्गोचरम्
गोपाल भजता मनो मम सदा ससार विच्छित्तय ॥१॥[5]

## २१ श्रीवासुदेवाचाय

चतन्यमहाप्रभो प्रसिद्धोनुयामिनोमहदेवविशारदस्य पुत्र श्रीमधुसूदन वाचस्पतेर्भ्राता । स्थितिकालश्चास्य १५ शताब्दी । नवद्वीप मण्डले विद्यानगराख्यस्य वसति । ब्राह्मणोविष्णुस्तोत्रेषु वासुदेवसरस्वती नाम्नानर स्तोत्राणि । तथा च—

---

1 हिन्दुत्वे ६७१ ८
2 श्रीस्तवकल्पद्रुमे ४२६ वृन्दावन मथुरा वि० २०१६
3 सन्त अके १६६
4 सन्त अके १४६
5 सन्त अके १४६ भगवन्नाम कौमुदीत

पापं खलोऽहमिति नार्हसि मां विहातुम्
किं रक्षया कृतमतरकुतोभयस्य ।
यस्मादसाधुरधमोऽहमपुण्यकर्मा
तस्मात्तवास्मि सुतरामनुकम्पनीय ॥१॥[1]

केचिदलङ्कारा —(यमक)

भानुनातुहिनभानुनाबहूदभानुना च विनिवर्तितन यत ।
तेनतज्जभटितिशार्तिमान्तरे ध्यातमिति तदुपास्महेमह ॥१॥[2]

शब्दश्लेषमूलको ध्वनि —

अम्बरेण गगनेन सम्वत जीवनशिरसिवर्णितम श्रितम ।
भोगिभिस्च भुजगविभूषित नक्रधुमक्र भजामहे ॥१॥[3]

एवमेव पञ्चविंशतिमस्तोत्रे चित्रकाव्ययमकादीनि । अस्य कविता भक्ति परिपूरितहृदयस्याद्गारा अत्र श्लेषानुप्रास यमकाना सम्मेलनम । सरसा-सरला करुणारसाप्लाविता ।

## १७ श्रीचैतन्यमहाप्रभु

गौडीयवैष्णव सम्प्रदायस्य प्रवर्तकोऽस्य मतम अचिन्त्यभेदाभेदवादमूलकम। कालान्तरेणायमेवास्य सम्प्रदायस्योपास्यश्च समजनि। श्रीकृष्णस्यावतार इति साम्प्रदायिका आविर्भाव १४०७ तिरोभाव १४५५ शकाब्द ।[4]

श्रीकृष्णभक्तिपरा श्लोका —

चेतोदर्पणमार्जन भवमहादावाग्निनिर्वापणम
श्रेय करवचन्द्रिका वितरण विद्यावधूजीवनम् ।
आनन्दाम्बुधिवर्धन प्रतिपद पूर्णामृतास्वादनम
सर्वात्मस्नापन परविजयते श्रीकृष्णसङ्कीर्तनम ॥१॥[5]

## १८ श्रीसनातनगोस्वामी

श्री महाप्रभुचैतन्यदेवस्य प्रधानोऽनुयायी जन्म सम्वत १४८८ ई० पितुर्नामकुमार देवामातुश्च रेवती भारद्वाजगोत्रीय मृत्यु १५५८।[6] वरीयोऽयं रूपगोस्वामिनो भ्राता । एकदा झञ्झावातसमन्वितेमघाच्छन्नतमसिबहिर्जगाम ।

---

१ तत्रव ११।३७
२ तत्रव ११७
३ तत्रव १।२१
१ सन्त अङ्क १६३ गीता प्रेस गोरखपुर
२ तत्रव पृ १६३
३ तत्रव पृ १६५

र्पयविवदमानयोश्चाण्डालदम्पत्यो स्त्री प्रोवाचास्मि कालेदुर्दिने श्वादासा वार्बाह-गच्छति नेतर आकर्ण्येदम्वृत्तान्तमस्य हृदिवैराग्यमजायत ।[1] अस्यश्रीकृष्ण लीलास्तव श्रीस्तवकल्पद्रुमे प्रकाशित । श्लोकाश्चात्र ४३ । स्तोत्रमिद भागवतस्य सक्षिप्तवर्णनानुसारि ।[2]

## १६ श्रीमद्रूपगोस्वामी

श्रीसनातनगोस्वामिनोलघुभ्राता जन्मकाल १४६६, पिता कुमारदेवो माता च रेवती । भारद्वाजगोत्रीयोमृत्यु काल १५६३ ई० । अचिन्त्याभेदमतात्मक श्री गौडीय-सम्प्रदायस्य प्रकाण्डविद्वान ।[3] आदौ मुस्लिमराज कमचर श्री चैतन्य महाप्रभुसम्पर्कता विरक्तोऽभूत । अस्यानेकस्तोत्राणि श्रीस्तवकल्पद्रुमे प्रकाशितानि तपु कानिचित्त आनन्दाख्यस्तोत्रमुकुन्दमुक्तावलीगोविन्दविरुदावली राधिकाष्टकादीनि । ललित ललिततरममरितम सानुप्रासम् श्रीकृष्ण-गुणकीतन परमिन्म ।

## २० श्रीलक्ष्मीधर

अस्य स्थितिकाल १५ शताब्दीत किंचित्पूर्व । अस्यपितुर्नामश्रीनर्सिह । अच्युतानन्द-परमहंसस्यशिष्योऽय[4] भगवत श्रीकृष्णस्य नाम महिमपरमस्य स्तोत्रम । भाषा सुललिता प्रसादा सरला प्रवाहमयी रचना । तथा च—

> 'नयनानन्दकर करम्बितकर हैयंगवीननव
> नाभामाश्वत नवीनजलदे मीलत्सुधांशो स्फुटम् ।
> भक्ताना हृदयस्थित सततमप्याभीर दगोचरम्
> गोपाल भजता मनो मम सदा ससार विच्छित्तये ।।१।।[5]

## २१ श्रीवासुदेवाचार्य

अनन्यमहाप्रभा प्रसिद्धो न्यायमिनोमहेश्वरविशारदस्य पुत्र श्रीमधुसूदन वाचस्पतेभ्राता । स्थितिकालश्चास्य १५ शताब्दी । नवद्वीप मण्डन विद्यानगरा करस्य वराति । ब्राह्मणोविष्णुस्तोत्रपु वागुश्वसरस्वती नाम्नानेक स्तोत्राणि । तथा च—

---

१ हिन्दुत्वे १०६ ८
२ श्रीस्तवकल्पद्रुमे ४२६ वृन्दावन प्रकाश वि २०१६
३ तत्र अंके १६६
४ तत्र अंके १४६
५ तत्र अंके १४६ भगवन्नाम कौमुद्यात

'नाह विप्रा न च नरपतिर्नापि वश्या न शूद्रो,
नाहवर्णी न च गहपतिर्नो वनस्था यतिर्वा।
किंतु प्राद्यन्नौखिलपरमानन्द पूर्णामृताब्धे
गोपीभर्तु पद कमलयोर्दासदासानुदास ॥१॥'[1]

## २२ श्री नृसिंहसरस्वती

अय श्री सदानन्दयोगीन्द्र रचित वेदान्त सारस्य टीका कर्ता। टीकेय १५१८ शकाब्दे लिखितानेकस्तोत्राणा रचयिता श्री विष्णुमाधवाप्टरयकटेश्वर दातक्रादीनाम। अस्यस्तत्तरीयाशाखा वत्तानस सनगौतम गोत्र यजुर्वेद पदमनाभी दरस्य पितान्तायरचगुर।[2] तथा च—

शाखा यस्य तुतत्तरीयविदिता सूत्र च वत्तानमम
गोत्र गौनममाङ्गिरश्च हविपा यागाश्रुतिर्याजुपी।
कालोऽर निगमागमप्रवचनविद्यार्थिना यापिन
स्वाचायस्तु पिता पितामहनिभ श्री पदमनाभाह वय ॥१॥
श्रीमदगौनम गोत्रजस्य विदुपोऽनन्तायनाम्न गरो
तस्या ह नरसिंह नामविदित शिष्यस्तुरीयानुज
श्रीमदवेंकटनायकास्त्वदमिद हृदयसता श्रावताम
पद्याना शतक चकार विदुपा विद्यानवद्यात्मनाम ॥२॥[3]

भाषा काव्यमयी समासबहुला क्वचित्सरलाप्रसादमयी सानुप्रासा।

## २३ श्री अप्पयदीक्षित

भगवताचायशङ्करेण प्रवर्तिताद्वतसम्प्रदायमहानाचाय। अलकार व्याकरणदर्शनादि विपयाणाम महनीयोविद्वान। अस्वरजहागीरयो समका लीनोस्यपितामह श्रीदीक्षित पिता च रगराजाध्वरि जन्मसवत्सर १५५० ई० मृत्युश्च १६२२। महान शिवभक्त स्तोत्रग्रन्थो वरदराजस्तव।[4]

## २४ श्रीनारायणभट्ट

अस्य स्तोत्रग्रन्थोनारायणीयम् नारायणेन प्रणीतत्वान्नारायणमधिकृत्य प्रणीतत्वाच्च द्विधाय सगच्छत। तथा च—

अज्ञात्वा ते महत्व यदिह निगदित विश्वनाथ क्षमेथा
स्तोत्रञ्चतत्सहस्रोत्तरमधिकतरत्वत्प्रसादाय भूयात।

---

१ सन्त अक ९६६

२ हिन्दुत्व प ६२६

३ स्तोत्रार्णवे पृ ४४६ श्लो ९७ ९८ वेंकटेश्वर प्रनके

४ सन्त अके प० १४८

द्वैधानारायणीयं श्रुतिषु जनुषा स्तुत्यता वर्णनेन ।
स्फीतं लीलावतारैरिदमिह कुरुतामायुरारोग्यसौख्यम् ॥[1]

स्तोत्रञ्चैतच्छी गुरुवायुपुरकृतसन्निधानस्यश्री नारायणस्य गुणगणाना प्रतिपादकम् । सुगहीन-नाम्ना नविवरेण भट्टपादेन प्रणीतम् । ग्रन्थकर्ता च केरलप्रान्तीयं 'चन्दनक्काव' देवी क्षेत्रस्य 'मेप्पत्तूर' ग्रामनिवासी आसीत यद्यप्यधुनाऽयं ग्रामः न तत्र वरीवर्ति परं चन्दनवनालयाया देव्याः क्षेत्र तु वर्तते एव । अस्यातिविस्तरेण शक्यते वक्तु सम्यक् । परं भूमिकानुसारमस्य ग्रन्थस्य रचना १६८८ शताब्दयामभूत् ।

अयं बाल्येविद्यायाननुष्ठीतं पाण्डित्यरहितो यौनादये मासारिकसुखमेव-परं मन्यमान श्वसुरगृह्यध्यवसत । कोऽपि विपश्चिदस्य बुद्धि-वलक्षण्यं तुष्टोऽस्य कुशाग्रबुद्धिताविद्या ममुरय चावलोक्यमशन्यमानचित्त इमं काव्यं नाटकानि विषयानध्यापयामास । बहुध्यस्य पराकोटिमनीयतमम । स च विद्वान्द्विजेतरश्चासीदेव वक्ष्यते यस्मवेन्नार्थवाणिमप्येन वेदानध्यापय वातान्तो जातः ।

अस्मिन्स्तोत्र चक्रवर्तिनिनारायणीय गंगा-तरंग भंगीमिवप्रकटयन्ती गान्सम्पत पाठक मन-पुण्डरीकेषु मक्तिकारुण किरण केलिमिव प्रकाशयन्ती रीतिगुणालङ्कारादिचातुरी जनयन्ती निस्सीमगुणगणं जनान भक्तिमावुका-न्मोदयति । तथा च—

सान्द्रानन्दावबोधात्मकमनुपमितं कालदेशावधिभ्याम्
निर्मुक्तं नित्यमुक्तं निगम शत-सहस्रेण निर्भास्यमानम् ।
अस्पष्टं दृष्टमात्रे पुनरुपपुरुषार्थात्मकं ब्रह्मतत्त्वम्
तत्तावद् भाति साक्षाद्गुरुपवनपुरे हन्त भाग्यं जनानाम् ॥१॥[2]

भगवन्नाममहिमा—

अजामिलोनाममहीसुरः पुरा चरन्विभाऽधर्मपथाशृहाश्रमी ।
गुरोगिर काननमभ्य दृष्टवान् सुधृष्टशीला कुलटा मदाकुलाम् ॥१॥
विष्णाचीर्याणि का वा कथयतु धरणे कस्यरेणून्मिमीते ।[3]
यस्यैवाङ्घ्रित्रयेण जगन्निखिलं भोन्त पूर्ण-सम्पत ।
योऽसौ विश्वं विधत्ते प्रियमितिपरम धामनस्यापि धानम
त्वद्भक्ता यत्र माद्यन्त्यमृतरसमरन्दस्य यत्र प्रवाह ॥२॥[4]

---

१ श्रीमन्नारायणीये त्रिवुरस्यवम्नोत्य प्रकाशन १९२१ श्लोक १०।६६
२ नारायणीये १।१
३ नारायणीये २२।२२२
४ तत्रैव ६६।१०१४

## २५ श्रीजीवगोस्वामी

श्री सनातन श्री रूपगोस्वामिनाऽनुजस्यानुपमस्यश्री वल्लभतिनामा तस्य पुत्र षोडश शताब्दीक गौडीयवैष्णवसम्प्रदायीयोऽयं । अस्य गुरुरपि श्री सनातन एवासीत व न्दावने राधादामोदरमन्दिरकारयामास । अस्यानेक स्तोत्राणि श्रीस्तवकल्पद्रुमे मुद्रितानि । तेषु कानिचित-श्री कृष्णाष्टकमयम श्री गोपालविरुदावल्यादीनि । सरले सगीतमयमनुप्रासमम्वलितम । तथा च—

> अमितभवम्बाधौ दह्यमान विरामे
> कथमपि कलयित्वा पूर्ण कारुण्यमूर्ति ।
> निजसहजजना त स्वीचरणाम्बुरो य
> तमिहमहित रूप कृष्णदेव निषेवे ॥१॥[1]

## २६ श्री ब्रह्मानन्द सरस्वती

अयमद्वतसिद्धचन्द्रिकाकारोमधुसूदनसमकालीन । षोडश शताब्दया उत्तरार्द्धवर्ती सप्तदशशताब्द्या पूर्वार्द्धम च । अद्वैतवादस्य प्रबल-समर्थकोऽयं अनेकानिस्तोत्राणि व्यरचयत । बृहत्स्तोत्ररत्नाकरे सकलितानि । तेषु कानिचित । तथा च—

रामाष्टकदीनबन्धवष्टकहरिनामाष्टक गोविन्दाष्टकरमापत्यष्टका दीनिस्तोत्राणि । स्तोत्र प्रकरणेविवेचितानि च ।

## २७ आचार्य मधुसूदन सरस्वती

अयमद्वैतसम्प्रदायप्रधानव्यक्यतम अस्यास्थिति कालनिर्णयो जटिल षोडशशताब्दया पूर्वार्द्ध वर्तीति मतनिश्चीयत एतिह्य । तथा चाय हिन्दी भाषाया कवितुलसीदास समकालीन । एव किम्वदन्त्यनुश्रूयते यत्तुलसी दासस्य—

> हरिहरयशसुरनरगिरा बरणहि सन्त सुजान ।
> हाडी हाटक चारुचि राधे स्वाद समान ॥१॥

अस्योत्तरे मधुसूदनाचार्योऽलिखत ।

> आनन्द काननेह्यस्मिन तुलसीजगमस्तरु ।
> कविता मजरी यस्य रामभ्रमरभूषिता ॥१॥[2]

स्ववाधक्य नवद्वीपे गदाधर भट्टाचार्यमप्यमिलत तथा च—

> नवद्वीपे समायाते मधुसूदन सरस्वतौ
> चकम्प तर्क वागीश कातरोऽभूत गदाधर ।[1]

---

१ श्रीस्तवकल्पद्रुम ९।१ श्रीकृष्णाष्टके

२ रसायन प ८ आ मधुसूदन सम्पादित अनन्त शास्त्री फडके काशी २ १८ अ०

३ भारतीय साहित्यशास्त्र, आचार्य बलदेव उपाध्याय १९६३ प ६१८

## ३० श्रीवकटाध्वरि

मद्रप्रान्तीय श्रावण्णवग्रासात । प्रय स्वविश्वगुणादशचम्पूकाव्यं ग्राग्लाना दुराचारवणनमकरात । ग्रताऽस्यस्थितिकाल १७श शताब्दी । ग्रात्रेय गोत्रस्यालकारनीति शास्त्र विदुष श्री श्रीनिवासाध्वरिणेनपत्रा रामचन्द्र चरणाब्जरसिकरघुनाथपुत्रेणश्री रामानुजायमतानुयायिथा वेंकटाचाय शिष्यणा नेन भा यम् । तथा च—

पौत्रणात्रयगोत्रामरणनयपण-श्रीनिवासाध्वरीन्दो
श्रीमद्रामाध्रिभक्तिप्रमुदितरघुनाथाययज्वात्मजेन ।
वेदान्ताचायपादाम्बुजनिहितहृदा वेंकटार्येणक्लप्ता ।
रम्यलक्ष्मीसहस्र पठन्ददतरनित्यकल्याणकाम ॥१॥[1]

रागपरिहाराय निगुणस्यापि परमात्मन परमश्वयसम्पादकम् । उच्चा वच्चप्रपचापादानविषयश्रीरमादम्यास्य दवतमवास्य कुशलाकुशलनिवतकतया श्रीस्तोत्ररचितमनेन । स्तवकानाचात्र पचविशति । श्लोकाश्च १०१४ ।

ग्रत्र गौडीवदर्भी च रीति । ग्रारमटीवत्ति कविरत्र विशिष्टाद्वैत सिद्धान्तानुयायी ।

रूपकभ्रान्तिमद्विभावनावाव्यलिंगात्प्रेक्षार्थान्तरन्यासाद्यलकारा प्रयुक्ता । शार्दूलविक्रीडितमालिनीमन्दाक्रान्तादिछन्दासि दीर्घ-समासपदानि । तथा च—

देविश्री - वपशालदेवदमित दाशिरायपरायक्षिते ।
मात साहसतस्तवस्तवमिम कतु प्रवृत्तस्य मे ।
उन्मील तुपर गिरस्तव कराल हुकार-मक्रहृात ।
प्रेंखत्तुगपडघ्रिसंवविसर झकारशकाक्ते ॥१॥[2]

## ३१ श्रीविश्वनाथ

ग्राचाय विश्वनाथचक्रवर्तिनो जन्म वगप्रान्तेऽभवत । कालश्चास्याष्टा दशशताब्दी ।[3] शयनिम्बाकमतावलम्बी ग्रासीत । ग्रस्य स्वप्नविलासामृताष्ट-कम श्रीरूपचिन्तामणि श्री राधिकाध्यानामृतस्तोत्रम ग्रयानि च श्रीस्तव-कल्पद्रुमे पकाशितानि । सरसासानुप्रासा सरला प्रवाहमयी भाषा । तथा च—

नवेन्दूपमपत्रपास्याप्रभात, सुलीलालकालीवत्तचारुभाले ।
मदनान्तराचित्रित चिनक तत् विभात्यच्युततृप्तनत्रक सम्पत ॥१॥[4]

---

१ लक्ष्मीसहस्र २५।१८ चौ स सी , वाराणसी १९०४
२ तत्रव १।२२
३ हिंदुत्वे प ६७४
४ श्रीस्तवकल्पद्रुम प २६७, श्लो० ४

वास सूत्र मणिमखला च, नाभिदलाम्भान्तररामवल्लयौ ।
पीनौ कुचौ कञ्चुलिकाचितौ च, कण्ठाभरेम मणि हेमहारम ॥२॥[1]

## ३२ श्री रघुनाथदासगोस्वामी

अय महाप्रभाश्चत यस्यानुयायी हुगली जनपदनिवासी कृष्णपुरभूस्वामिन श्री गोवधनदासस्य पुत्र आसीत्स्तोत्रग्रन्था [2] राधिकाष्टकम् श्रीनवाष्टकम् श्रीराधिकाष्टोत्तरशतनामादीनि श्रीस्तवे मुद्रितानि ।

## ३३ श्रीवासिष्ठगणपतिमुनि

अय विशाखापट्टनप्रदेशान्तगत कलवरा" ग्राम निवासी आसीत इत्यस्यानुपद वक्ष्यमाणप्रशसापत्रतानायते अस्यपितुर्नाम श्रीनरसिंहशास्त्री ।
उमासहस्रमस्य स्तोत्रग्रन्थ ।

उमासहस्रेतिमहत स्तोत्रग्रन्थस्य प्रणता काव्यकण्ठपदलाछनोभगवान वासिष्ठगणपतमुनि । अस्य जीवनम वेदा शास्त्राणि कवितादीनि च निसग ज्वलिता प्रभा समुज्ज्वाल्यापूरयत । अस्य नयोभ्रातरश्रासन तेष्वय द्वितीय । जन्मन प्रागस्यपितास्वप्नेपश्यत विघनश्वर सन्निधौ स्थितस्य तस्योपकण्ठ कोऽपि शिशु गणपत निगत्येममुपागत्य अन्तर्यलीयत । अतएवास्य गाणपतेरयाख्या । बाल्यमूर्च्छारोगाक्रान्त पष्ठेऽदेनीरकनात । दशमे वर्षे पचाग गणितु प्राभवत् । द्वादशे मृगसन्देशकाव्यमलिखत । तथा च—

इहवैपाविदया चेन सन्तोपाय वा क्षति ।
निमान्ताय कावाना बालराकिनवावली ॥१॥[3]

अधीतशास्त्रणादिग्गास्त्रस्नीषयाश्राप्रसगत कारयामागत्यमहामहोपाध्यायश्री शिवकुमारशास्त्रिणमभिलत । तत्रव वसश्चविश्रुतनवद्वीपनगरे पाण्डित्यपरीक्षायप्रवतन्त्या पण्डितपरिषदि सुहृत्प्रेरणयागत । तत्र च समस्यापूरणं सवा चमत्कृतवानयम् । प्रशसापत्र च लब्धवान । तत्प्रतिलिपिरवेत्थम् ।
श्रीमद्गणपति शास्त्रिनसमारे गल्वस्मिन कवित्वमित्यसमुद्रसमुत्थमभृतम्—
सुदुलभवनत नौराधिर-सौभाग्यवशात सुप्रसन्नदेवानुकम्पया वा म कश्चिन्हि समधि गुच्छ । म च भूम्या पि स्वर्गीय इतिसस्पृहमालोक्यमानो गुणपक्षपातिभिर्विद्वद्भिर्निरमादियत ।

अन्ते यत्प्रमत्रदिमरगाधारण-कवित्वमिह प्रकटयय गुधियस्मये सन्तापमापन्निता । तनव च चरितार्था नवद्वीपवासिन कोविदा वयमनेपगुणधाम्ने

---

१ तत्रैव प ६८५ श्लोक २७
२ स्तवमाला प १६८
३ उमासहस्र १ अरविन्दाश्रम पाण्डिचरी १९६२

विशाल पटन प्रदेशान्तर्गत नलवराई ग्राम वसतये श्रीमदगणपतिशास्त्रिणे तुभ्यमाशीर्वादपूर्वकमिमं श्लोकमुपहराम ।

प्राचीनरत्न भविभुनवम कालिदासादिभिर्या
लब्धा कीर्तिमदनुगना सर्वभूयादिदानीम् ।
सदिमदत्ता य इह रुचिर काव्य-कण्ठापहार
तेन श्रीमानिहमुवि भवानुज्ज्वलश्चापिभूया ॥१॥[1]

१८९३ शकाब्दीय सौरज्येष्ठमासास्याष्टमदिवसे श्रीयुत-तारानन कृष्णतर्क पचानन । उपहारस्याधस्तात चतुर्दश पण्डिताना नामानि स्वहस्त लिखितानि ।

अत्र स्तोत्रकाव्य दशशतकानि प्रतिशतक च चत्वारस्तवका प्रतिस्तवक पञ्चविंशति श्लोका ।

वेदवेदान्त-योगतन्त्रादि रहस्यानि भेषजानिमधुराण्युपनिमर्थ्य स्तोत्र साहित्येन रोचय साधुलोक वीतशोक विदधानारमयति रमणशिष्य । सवश्वर्या अनुग्रहाय लीलाचरित्रकीर्तन का यशामापोषक व्युत्पित्सूना साहित्यसरणि बोधाय युत्पन्नाना प्रमादाय च प्रभुरय रसोज्ज्वल साहित्य सन्दर्भ । तथा च उमादेव्या पर्वतराजपुत्र्या सम्भववालपरिणय श्रृगार-कथा श्रूयन्त ।

मन्दस्मित कृपा कटाक्षनाम वमवानि रसावहामि वाग्भि वर्णिता । ओज प्रासादमाधुर्यैरथत शन्तश्च समुन्नत च व्याप्तायेतानि पद्यानि । तथा च—

अत्रापि गुण तेशाश्चन्नालकारिस्सम्मता ।
सप्रताप सरस्वत्या निगच्छन्त्या अनगलम ॥१॥[2]

बहुषु स्तवकेषु प्रवहन्करुणरसो रसिकानाप्लावयन विलसति । प्रशस्ते ऽस्मिन स्तोत्र काव्य एकक श्लोक रसभरभरितस्तदिदम ।

अभिनवमननीय निदर्शन च स्तोत्र साहित्यस्यामूल्य फल । विवदिक्षूणा मनल्पबल । भक्तलोकस्य सहृदयाना साधूना च हृदयाह्वावजय मुदावहम । केचिदलकारा —

अखिल-जगन्नाशीमा तमसातापेन चाकुलानस्मान ।
अनुगृह णात्वनुकम्पासुधाद्रयाहसितचन्द्रिक्या ॥१॥[3]

श्लेषोज्जीवितरूपकम्—

---

१ उमासहस्र भूमिकायाम्
२ तत्र च
३ उमास०स्रे भूमिकायाम १।१ १

मन्नीयमम्बिकाखिलस्य विप्पपस्य दुष्पधी ।
दविष्ठ पात्पकजा धुनाति कष्टजालकम् ।
इम च कामल पद अमूत्यतन्य गानिन
तन्नीयमचस्पता भजतु पच चामरा ।।१।।[1]

इत्यमिह दिङमात्रम प्रमुखाना स्तोत्रकाराणा परिचयो दत्ता विस्तत विवेचनन्तु पृथक् पुस्तकप्रणयन साध्यमिनि ।

---

१ तत्रैव ।।२।।२९

# परिशिष्टम्-१

गणेश्प्रपञ्च देवाना स्तोत्राणम् विशिष्टसामान्यभदन शोधो जात । विशिष्टस्तोत्रवरसामान्यस्तोत्राणामपि, अध्ययनमपेक्षितमासीदिति जानताऽपि मयका ग्रन्थपृष्ठ सख्या द्विसहस्रतोऽप्यधिका स्यादितिभिया नाकारि । आशुतोषस्य भगवत कृपया कालेन साध्य भवेदिति आशासेऽहम । तथापि सामान्य स्तोत्र प्रकरण बहुतकाव्यरूपेण ग्रथिताना ग्रन्थाना पुराणत सकलितपुस्तकेषु प्रकाशिताना च केषाञ्चित्स्तोत्राणा स्थालीपुलाकन्यायेनाध्ययनमत्रावयत ।

(क) गणेशस्य भगवत सामान्य स्तोत्रेषु २, ४ ५, ६ ८ १६, २० ३८, सख्याकाना सग्रहो बहत्स्तोत्ररत्नाकरत काशीसस्करणत कृतस्तदऽश्रित्य चाध्ययनमपा सामान्यत प्रस्तूयत ३ ७ २१ २४ २८ २७ २८ सख्याकाना च स्तोत्राणवे प्रकाशिताना मद्रासविश्वविद्यालय ताडपत्रेधृथतानामध्ययनञ्चापि तदाश्रित्य प्रस्तूयते ।

(२) अत्रानुष्टुपछन्द पौराणिकी भाषा सानुप्रासा सरला सप्रसादा नामगणनात्मक चेम्मनस्तोत्रे गणपतिर्व्यासभ्राता शुकन्वेषित यदच समीरित । व्यासभ्रात्रे शुकस्य जिन यायति तच्चेद स्तोत्र त्वा गजासुरवधानन्तर चन्‌ ।

(४) अत्रद्विरदादिनामभि स्तवनम । गणशोऽत्रविनायक यत न कोऽपि तत्पर तस्मादधिकश्च नायकोऽस्ति त्रिभुवन विगतानायका यस्य चस्मादिति बहुव्रीहिसमास । यथा बलिनिग्रह वामनस्त्रिपुरदहने च शिव स्यात स्तथव विघ्नव्रजदलने गणश प्रसिद्ध ।

(५) वासुदेव सरस्वती रचितमेतदन निर्विघ्नतासिद्धय हरीशादि देवरपि गणेशोऽर्चनीय इति कथित । दूर्वांकुरलाजाद्य पूजनेनास्यहिकामुष्मिक भागप्राप्तिन दुलभा।

(६) वासुदेव सरस्वती रचितमेतदत्रानुष्टुपछन्दोऽस्य प्रणामन विघ्ना क्षय यान्ति । कवित्वगवितारारकमिद स्तोत्रम ।

(८) गणेशपुराणोत्तरखण्डत सकलनेऽत्रधतमश्लोकानाञ्चात्र सप्तविंशति गणेश युगानुरूप रूप विभिन्न वर्णनम । अस्य विभिन्न नामभिरगरक्षादिन्यासादिकमत्र निरूपितम ।

(१६) श्लोकानामत्र नवकम पद्मपुराणस्थोत्तर खण्डत सकलितम

मालतीछन्दोबद्ध सुललितमस्य पाठेन दुःख नाशः ।

व्यासाष्टकमिदं पुण्यं, गणेशस्तवनं नृणाम् ।
पठतां दुःखनाशाय, विद्यां सश्रियमश्नुते ॥

(२०) गणेशपुराणे उद्धतमत्र श्लोकाः १३ । अद्वैत वेदान्त मत स्थापन पुरस्सरमत्र गाणपत्य ब्रह्मेति साधितम् । गणेशश्च नेति-नेति शब्दैरेव निर्वचनीय ।

(३४) सङ्कष्ट हरणगणेशाष्टकमत्र तन्त्रात्मकरीत्या 'व व व तु तु तु लौं लौं' इत्या भगवान गणेश सस्तुत । राजानोऽपि स्तोत्रस्यास्य प्रभावतो वश्यतां यान्ति ।

राजानस्तस्यभृत्याइव युवतिकुलमपि सवशस्य दासश्च लक्ष्मी सर्वाग युक्ताश्रयति च सदनं, किंकरा सर्वलोका ।

प्रधस्तनानि च स्तोत्राणि

(३) ताडपत्रीयमेतत्सर्वप्रथम मद्रासत स्तोत्रार्णवे प्रकाशितम् । श्लोकास्तत्र ३२ । अनुष्टुपछन्द । सरसा सप्रसादा भाषा पौराणिकी । सौभाग्यवर्द्धनपुरस्सरम् समस्तप्सितदम । वक्ता महादेव श्रोत्री पार्वती ।

इति मन्त्रावलिस्तोत्रं, कथितं तव सुन्दरि ।
समस्तमीप्सितं तेन सम्पादय शिवे शिवम ॥

(७) श्रीकृष्णलीलाशुकमुनिविरचितमिदमत्र ४० श्लोका शार्दूल विक्रीडितानुष्टुप मालनी छन्दोबद्धम । शब्दाम्या मनोरमा ललिता पदपंक्ति प्रवाहश्चाविच्छिन्न । तथा च—

आस्तेधारसमुन्वासवदिना पारस्थली गोपुरान
याह य वामकरायकामविषयमाघ महान्पिप्पल ।
आस्थानयदुपान्तधय धरणीमास्थाय देव स्वयम
दन्तीन्द्राननविग्रहस्त्रिभुवन पुण्यानि तस्नैवर ॥१॥
निरवधि मन्धारा निर्भरा भ्राम्यमाण—
भ्रमर-समर-लीला - धीरणीदत्त दृष्टि ।
अभिमतवरदान व्यग्रहस्तारविन्द
करियमलमुखी न कामधेनु धिनोति ॥

(२१) श्रीगणेशाष्टकमनेनस्तोत्राणवेधृतमत्र श्लोकानाम् नवकम । अत्र भगवतोगणेशस्य स्वरूपवर्णनमनोहराकर स्तोत्रस्यास्य पाठेन सर्वकार्याणि सिद्ध्यन्ति—

गणेशाष्टकमिदं पुण्यं य पठेत्सततं नर ।
सिद्ध्यन्ति सर्वकार्याणि विद्यावाञ्जायते ॥

(२६) श्रीविघ्नेश्वरगीतम् भवतत्रेतिरहस्य धारात नरव बल—

